अथ

श्री

# गीतगोविंदाख्यं काव्यं प्रारभ्यते.

इदं सटीकं काव्यं श्रीकृष्ण-
तनयेन गंगाविष्णुना श्री-
वेंकटेशाख्ये स्वीयशिला
यंत्रेंऽकितम् गजगुण
नंदचंद्र १९३८ मिते वैक्र
माब्दे ज्ये० शु० त्र० स०

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

SIRKAR'S FAMILY LIBRARY
Beliaghatta Main Road
CALCUTTA
1911

SIRKAR'S FAMILY LIBRARY
Beliaghatta Main Road
CALCUTTA
1911

श्रीः

अथ

श्रीमत्कविराजजयदेवपंडितकृतं

# गीतगोविंदाख्यं

काव्यं

प्रारभ्यते.

श्लोकः ॥ मेघैर्मेदुरमंबरं वनभुवः श्या
मास्तमालद्रुमैर्नक्तं भीरुरयं त्वमेव त
दिमं राधे गृहं प्रापय ॥ इत्थं नंदनिदेश
तश्चलितयोः प्रत्यध्वकुंजद्रुमं राधामा
धवयोर्जयंति यमुनाकूले रहः केलयः १

श्रीराधाकृष्णाभ्यांनमः भद्राय भवतां भूयात्कृष्णः सद्भ
क्तिभावितः ॥ कालिंदीजलसंसर्गमेघश्यामोतिसुंदरः १
इह कविः प्रारिप्सितस्यनिर्विघ्नपरिसमाप्त्यर्थं कृष्णस्मरण
रूपवस्तुनिर्देशलक्षणंमंगलाचरणं तावदाचरति मेघैरिति
राधामाधवयोः रहः केलयः यमुनाकूलेजयंतीत्यन्वयः राधा
कृष्णयोः रहः केलयः एकांतक्रीडाः यमुनाकूलेयमुनातीरे

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

जयंति सर्वोत्कर्षेणवर्तेते कथंभूतयोः राधामाधवयोः प्रत्यध्वकुंजद्रुमं अध्वनिमार्गे कुंजे लतागृहे द्रुमे वृक्षेच स्थंइति नंदनिदेशतः नंदाज्ञयाचलितयोः अथवा अध्व कुंजद्रुमान्प्रतिउद्दिश्यचलितयोः इतिकिंहेराधे अंबरं आकाशं मेघैर्मेदुरंव्याप्तमित्यर्थः वनभुवः तमालद्रुमैर्वृक्षैःश्यामाः अयंकृष्णः नक्तंरात्रौभीरुः भयशीलः अतिबालत्वात् तस्मात्त्वंपुरोवर्तिनं कृष्णं गृहंप्रापय एवं करणेनंदस्यान्यस्मिन् विश्वासाभावात्॥१॥

श्लोकः॥वाग्देवताचरितचित्रितचित्तसद्मा पद्मावतीचरणचारणचक्रवर्ती ॥श्रीवासुदेवरतिकेलिकथासमेतमेतं करोति जयदेवकविः प्रबंधम्॥२॥

इदानींकविः सरस्वतीलक्ष्म्योः कीर्तनपूर्वकं कृष्णस्य सुरतक्रीडावर्णनंकर्तुमाह वसंततिलकावृत्तेन वाग्देवतेति जयदेवकविः एतं प्रबंधंकृष्णकेलिकथाप्रतिपादकग्रंथंकरोतीत्यन्वयः कथंभूतोजयदेवकविः वाग्देवताचरितचित्रितचित्तसद्मावाग्देवतायाः सरस्वत्याश्चरितेनवचनरचनाचारविशेषेणचित्रितंमंडितंचित्तसद्ममनोगृहंयस्यसः पुनःकथंभूतः पद्मावत्या लक्ष्म्याश्चरणचारणेनसंवाहनेनचक्रवर्तीनृपइवलक्ष्मीसेवयाचक्रवर्तित्वंप्राप्तइति कथंभूतंप्रबंधं श्रीवासुदेवेति श्रीरूपिणीराधावासुदेवः श्रीकृष्णश्च तयोः रतिकेलिकथयासु

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

रतक्रीडाकथनेनसमेतंयुक्तं ॥२॥

श्लोकः॥यदि हरिस्मरणे सरसं मनो यदि विलासकलासु कुतूहलं॥मधुरकोमलकांतपदावलीं शृणु तदा जयदेवसरस्वतीं॥३

अथकविर्निजग्रंथप्रयोजनमाह द्रुतविलंबितेनवृत्तेन यदीति हेकृष्णभक्त तदातर्हि जयदेवसरस्वतींशृणुइत्यन्वयः यदियर्हिहरिस्मरणे कृष्णचिंतनेसरसंसानुरागंतवमनः अस्तीत्यध्याहारः यदियर्हिविलासकलासु विलासः श्रीकृष्णविलासः कलाश्चतुःषष्टिस्तासुकुतूहलमस्तीति कथंभूतांजयदेवसरस्वतीं मधुरासरसाअर्थतः कोमलाशब्दतः अतएवकांता मनोहरापदावलीपदसमूहोयस्यांसाताम्॥ ३॥

श्लोकः॥वाचः पल्लवयत्युमापतिधरः संदर्भशुद्धिं गिरां जानीते जयदेव एव शरणः श्लाघ्योदुरूहद्रुतेः॥शृंगारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धनस्पर्द्धी कोपि न विश्रुतः श्रुतिधरो धोई कविक्ष्मापतिः॥४॥

कविरन्यग्रंथेभ्यो मद्ग्रंथेबहवोगुणाः संतीतिद्योतयन् शार्दूलविक्रीडितेनाहवाचइति उमापतिधरोनामकविर्वाचः वचनानिपल्लवयतिविस्तारयतिनतुगुणान् गिरां संदर्भशुद्धितः शब्दतश्चग्रंथनविशुद्धिंजयदेवएवपरंजानीतेनान्यइत्यर्थः शरणोनामकविः दुरूहद्रुतेः विषमग्रंथस्यशीघ्रोच्चारतः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

श्लाघ्यः स्तुत्यः शृंगारेति शृंगारोत्तराणिशृंगारप्रधानानिसं
तिउत्कृष्टानिप्रमेयानिवावचनानितेषांरचनैः प्रबंधैः आचा
र्यगोवर्धनस्पर्धीकोपिनविश्रुतः आचार्यगोवर्द्धनः कविः शृंग
रप्रधानमेवप्रबंधकरोतीत्यर्थः धोईनामाकविक्ष्मापतिः कविरा
जः श्रुतिधरः श्रुत्वाश्रवणमात्रेणैवधारयतिनपुनरर्थादिग्रहणे
प्रवीणः इतिराजपदेनमहाहंकारकथनं॥ ४॥

## अथ प्रथमप्रबंधो मालवरागेण रूपक तालेगीयते.

प्रलयपयोधिजले धृतवानसि वेदं॥ विहि
तवहित्रचरित्रमखेदं॥ केशव धृतमीनश
रीर जय जगदीश हरे॥ १॥

कविरधुना भक्तानुग्रहार्थं विघ्नाभावार्थंचदशावतारवर्णन
माह प्रलयेत्यादिजगदीशइत्यंतं अस्यगीतस्य मालवरागः
रूपकतालः तल्लक्षणं नितंबिनीचुंबितवक्त्रपद्मः शुकद्युतिः
कुंडलवान्किरीटी संगीतशालांप्रविशन्प्रदोषेमालाधरोमाल
वरागराजः रूपकेस्यात् द्रुतंलघुरिति हेकेशवधृतंमीनस्य
शरीरंवेदोद्धरणार्थंयेनसः हे जगदीश हेहरे जयउत्कर्षेणव-
र्तस्व कस्मादित्यतआह त्वंप्रलयपयोधिजलेकल्पांतसमुद्रज
लेनिमग्नंवेदंधृतवानसि कथंअखेदं अपरिश्रमंयथाभवति
तथा पुनःकथंविहितेति विहितंकृतंवहित्रचरित्रंसमुद्रतर
णकारणनौकाचेष्टितंयत्रंक्रियायां॥ १॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

क्षितिरतिविपुलतरे तव तिष्ठति पृष्ठे॥ धर
णिधरणकिणचक्रगरिष्ठे॥ केशव धृतक
च्छपरूप जय जगदीश हरे॥ २॥

क्षितिरिति हेकेशवधृतं कच्छपस्य रूपं येन सः तत्सं
बोधनं हेजगदीशहेहरे जय पूर्ववत् तवपृष्ठेक्षितिः पृथ्वी ति
ष्ठतीत्यन्वयः कथंभूतेपृष्ठे अतिविपुलतरे अतिक्रांतः विपुल
तरःपदार्थोयेन पुनःकथंभूते धरण्याः क्ष्मायाधरणेनवहनेन
यत्किणचक्रंमृतपिंडस्तेनगरिष्ठेदृढे॥ २॥

वसति दशनशिखरे धरणी तव लग्ना॥ श
शिनि कलंककलेव निमग्ना॥ केशव धृत
सूकररूप जय जगदीश हरे॥ ३॥

वसतीति हेकेशवेत्यादिपूर्ववत् धृतंसूकरस्यरूपंयेन
तवदशनशिखरे दंताग्रभागेधरणीपृथ्वीलग्नासंबद्धावसति त
त्रदृष्टांतःकेव शशिनिचंद्रेनिमग्नाअंतःस्थिताकलंककलेव
कलंकरेखेव॥ ३॥

तव करकमलवरे नखमद्भुतशृंगं॥ दलि
तहिरण्यकशिपुतनुभृंगं॥ केशव धृतन
रहरिरूप जय जगदीश हरे॥ ४॥

नखेति हेधृतंनरहरेः रूपंनरसिंहस्यस्वरूपंयेनतत्संबो
धनं तवकरकमलवरे हस्तपद्मश्रेष्ठेनखमस्तीत्यध्याहारःक
थंभूतंनखं अद्भुतशृंगंआश्चर्यकरं शृंगमग्रभागोयस्यअ

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

द्भुतत्वेहेतुमाह दलितः विदारितः हिरण्यकशिपोर्दैत्यस्यतनुरे वभृंगोभ्रमरोयेन अन्यत्रभ्रमरेणकमलाग्रंदल्यतेइहतुवैपरीत्येनाश्चर्यम् ॥ ४॥

छलयसि विक्रमणे बलिमद्भुतवामन ॥ प
दनखनीरजनितजनपावन ॥ केशव धृत
वामनरूप जय जगदीश हरे ॥ ५॥

छलयसीति धृतंवामनस्यरूपंयेन हेअद्भुतवामन आश्चर्य हेतुवामन त्वं विक्रमणेपादविक्षेपेकर्तव्येबलिं असुरं छलयसि प्रवंचयसि कीदृशस्त्वमिति संबोधनं पदेति पदनखनीरेणपदनखाग्रसंबंधिजलेन गंगारूपेणजनितंकृतं जनपावनं लोकपावित्र्यंयेन ॥ ५॥

क्षत्रियरुधिरमये जगदपगतपापं ॥ स्नप
यसि पयसि शमितभवतापं ॥ केशव धृत
भृगुपतिरूप जय जगदीश हरे ॥ ६॥

क्षत्रियेति हेधृतभृगुपतिरूपधृतपरशरामरूप क्षत्रियरुधिरमये पयसिजगत्स्नपयसीत्यन्वयः क्षत्रियाणांशोणितविकारेजलेजगत्स्नापयसि स्नानेनफलमाह कथंभूतं जगत् अपगतपापंगतकलुषं पुनः कथंभूतं शमितभवतापं दूरीकृतसंसारतापं ॥ ६॥

वितरसि दिक्षु रणे दिक्पतिकमनीयं ॥
दशमुखमौलिबलिं रमणीयं ॥ केशव

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

धृतरघुपतिरूप जय जगदीश हरे॥७॥

वितरसीति हे धृतरघुपतिरूप धृतरामशरीर त्वं रणेसंग्रामे दशमुखमौलिबलिं रावणमस्तकोपहारं दिक्षु दिक्पा- लेभ्यः वितरसि ददासि कीदृशं दिक्पतिकमनीयं इंद्रादीनां रमणीयं काम्यं इच्छाविषयमित्यर्थः॥७॥

वहसि वपुषि विशदे वसनं जलदाभं॥ हलहतिभीतिमिलितयमुनाभं॥केशव धृतहलधररूप जय जगदीश हरे॥८॥

वहसीति हे धृतहलधररूप धृतबलभद्ररूप त्वं वपुषि वसनं वस्त्रं वहसि धारयसि कथंभूते वपुषि विशदे शुभ्रे कथंभूतं वसनं जलदाभं सजलमेघसदृशं पुनः कथंभूतं हलहतिभीत्या लांगलाघातभयेन मिलिता उपस्थिता या यमुना तद्वत् आभा दीप्तिर्यस्य तत्॥ भयेनातिश्यामत्वं भवति॥८॥

निंदसि यज्ञविधेरहह श्रुतिजातं॥सदयहृदय दर्शितपशुघातं॥केशव धृतबुद्धशरीर जय जगदीश हरे॥९॥

निंदसीति हे धृतबुद्धशरीर धृतबुद्धावतार हे सदयहृदय दयासहितांतःकरण जय ननु वेदनिंदकस्य कथं स्तुतिरित्यत आह. त्वं यज्ञविधेः क्रतुविधानसंबंधि श्रुतिजातं वेदवाक्यसमूहं निंदसि दूषयसि न तु सर्वमित्यर्थः सोपि किमिति निंद्यते इत्यत आह. अहह कष्टं दयायां वा दर्शितः बोधितः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

पशूनांघातोवधोयेनताद्दशं वेदोपिपशूनांघातं बोधयतीत्य
तअहोकष्टमित्येवनिंदयसीतिभाव: ॥ ९॥

म्लेच्छनिवहनिधने कलयसि करवालं॥
धूमकेतुमिव किमपि करालं॥केशवधृत
कल्किशरीर जय जगदीश हरे॥१०॥

म्लेच्छेति हेधृतकल्किशरीरधृतकल्क्यवतारशरीर त
च्चेष्टितमाह.त्वंम्लेच्छनिवहनिधनेम्लेच्छानांनिवहा: स
मूहास्तेषांनिधनेनाशनिमित्तंकिमपि अनिर्वचनीयं करवालं
खड्गंकलयसिधारयसिकथंभूतंकरवालं धूमकेतुमिव -
औत्पातिकतारकापातमिवकरालंभयानकं अथवाधूम
केतुरग्निस्तमिव॥१०॥

श्रीजयदेवकवेरिदमुदितमुदारं॥शृणु
सुखदं शुभदं भवसारं॥केशव धृतदश
विधरूप जय जगदीश हरे॥११॥

## इति श्रीगीतगोविंदे प्रथम प्रबंध:

धृतवानसीत्यादिभिर्वर्तमानप्रयोगैरवताराणांभगव
तश्चलीलाया: नित्यत्वंदर्शितं एवंतत्तदवतारगुणै: स्तुतिंकृ
त्वासंप्रत्यवतारिणंस्तुवन्प्रार्थयते श्रीजयदेवेति हेकेशव
धृतानिदशविधानिरूपाणियेनतत्संबोधनं श्रीजयदेवक
वे: इदंगीतं उदितंभाषितंशृणु आकर्णयेतिभक्तजनं-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

यत्सुक्तिः कीदृशांउदारं मनोहरंसुश्राव्यत्वात् श्रमदंक ल्याणदायकं भवसारं संसारेधनरूपं॥११॥

श्लोकः॥ वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते॥ पौलस्त्यं जयते हलंकलयते कारुण्यमातन्वते म्लेच्छान्मूर्छयते दशाकृतिकृते कृष्णाय तुभ्यंनमः॥१॥

उक्तानेवावतारान्पुनः संक्षेपेणकीर्तयति वेदानिति तुभ्यंकृष्णायनमः अस्तु इत्यन्वयः कथंभूतायवेदानुद्धरते मीनरूपेण पुनःकथंभूताय जगन्निवहतेधारयते कूर्मरूपेण भूगोलंपृथ्वीचक्रं उद्बिभ्रतेऊर्ध्वंधारयते वाराहरूपेण दैत्यंहिरण्यकशिपुंदारयते नृसिंहरूपेण बलिंबलिदैत्यंछलयते वंचयते वामनरूपेण क्षत्रक्षयं क्षत्रियनाशंकुर्वते परशुरामरूपेण पौलस्त्यंरावणंजयतेरामरूपेण हलं लांगलंकलयतेधारयतेबलभद्ररूपेण कारुण्यंदयां आतन्वतेविस्तारयते बुद्धरूपेण म्लेच्छान् अंत्यजान्मूर्छयते नाशयतेकल्किरूपेण अतएवदशाकृतिकृतेदशविधरूपधारिणे॥१॥

अथ द्वितीयप्रबंधो गुर्जरीरागेण प्रतिमठताले गीयते॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

श्रितकमलाकुचमंडल धृतकुंडल ए॥ क
लितललितवनमाल जय जय देव हरे १

कविरिदानीं गुर्जरीरागेण कृष्णं स्तौतिरागलक्षणं श्यामा स्फ केशी मलयद्रुमाणां मृदूल्लसत्पल्लवतल्पयाता श्रुतेः स्वरर्णां दधती विभागं तंत्रीसुखा दक्षिण गुर्जरीयं इति श्रितेति हेदेव हेहरे जयजय स्वभक्तपक्षपाते सर्वोत्कर्षेण वर्द्धस्व श्रितेत्यादीनि अष्टपद्याः पदानि संबोधनानि ज्ञातव्यानि एइतिपदं हेइत्यर्थः हेश्रितकमलाकुचमंडल श्रितं आश्रितं कमलायाः लक्ष्म्याः कुचमंडलं स्तनमंडलं येन हे धृतकुंडल धृते कुंडले येन तस्य संबोधनं कलितेति कलिता धृता ललिता सुंदर वनमालापुष्पदामयेन ॥१॥

दिनमणिमंडलमंडन भवखंडन ए॥ मु-
निजनमानसहंस जय जय देव हरे २

दिनमणीति हेदिनमणिमंडलमंडन सूर्यमंडलालंकार हेभवखंडन भक्तानां संसारनाशक हेमुनिजनमानसहंस मुनिजनानां मानसे हंस इव मानसे सरसि हंसोस्ति तद्वत् जयजयेति पूर्ववत् ॥२॥

कालियविषधरगंजन जनरंजन ए य
दुकुलनलिनदिनेश ॥ जय जय देव हरे ॥३

कालियेति कालियनाम्नः सर्पस्य गंजन हिंसक हेजनरंजन हे यदुकुलनलिनं यादवकुलकमलसूर्य ॥३॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

मधुमुरनरकविनाशन गरुडासन ए सुरकुलकेलिनिदान॥जय जय देव हरे॥४॥

मधुमुरेति मधुमुरनरकसंज्ञानांदैत्यानांनाशन गरुडासनगरुडएवआसनंयस्यसः सुरकुलेति सुरकुलानांदेवसमूहानांकेलेः क्रीडायाःसुखस्येतियावत्‌निदान आदिकारण॥४॥

अमलकमलदललोचन भवमोचन ए त्रिभुवनभवननिधान॥जय जय देव हरे॥५॥

अमलेति अमलकमलवत्‌निर्मलपद्मपत्रवत् लोचनेयस्य हेभवमोचनसंसारभंजक त्रिभुवनभवननिधान त्रिभुवनमेवभवनंगृहंतत्रनिधानमिवनिधिरिव॥५॥

जनकसुताकृतभूषण जितदूषण ए समरशमितदशकंठ॥जय जय देव हरे६

जनकेति जनकसुतायाः सीतायाः कृतभूषण कृतालंकारजितदूषण जितोदूषणनामाराक्षसोयेन समरेति समरेसंग्रामेशमितो मारितोदशकंठोरावणोयेन॥६॥

अभिनवजलधरसुंदर धृतमंदर ए श्रीमुखचंद्रचकोर॥जय जय देव हरे॥७॥

अभिनवेति अभिनवजलधरसुंदर हेसजलमेघकांते धृतमंदरधृतमंदराचल श्रीमुखचंद्रचकोरलक्ष्मीमुखमेव

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

चंद्रस्तत्रचकोरइव ॥ ७ ॥

तवचरणे प्रणता वयमिति भावय एकु रुकुशलं प्रणतेषु ॥ जय जय देव हरे ॥ ८ ॥

तवेति एवंभूतहेहरे जयजयेति तवचरणेवयंप्रणताः अतीवनम्राइति भावयजानीहि प्रणतेषुमादृशेषु कुशलंकल्याणंकुरु ॥ ८ ॥

श्रीजयदेवकवेरिदं कुरुते मुदम् ॥ मंगल मुज्ज्वलगीतम् ॥ जय जय देव हरे ॥ ९ ॥

इति श्रीगीतगोविंदे द्वितीयप्रबंधः

श्रीजयदेवेति हेदेवहेहरे जयजयेतिप्रार्थयते श्रीजयदेवकवेः इदंउदितंमंगलंगीतविशेषः मुदंहर्षंकुरुते शृण्वतां भक्तानामितिशेषः कथंभूतंइदंमंगलं उज्ज्वलंगीतं तदनुगमनेरम्यंगीतंगानंयस्मिन् ॥ ९ ॥

श्लोकः ॥ पद्मापयोधरतटीपरिरंभलग्न काश्मीरमुद्रितमुरो मधुसूदनस्य ॥ व्यक्तानुरागमिव खेलदनंगखेदस्वेदांबु पूरमनुपूरयतु प्रियं वः ॥ १ ॥

अधुनाकविः कामोद्दीपकत्वात् वसंतस्यव्याजेन कृष्णक्रीडां वक्तुंभक्तानुप्रतिआशिषंब्रूते पद्मेति मधुसूदनस्य उरोवक्षस्थलंवः युष्माकंप्रियमभीष्टमनुपूरयतुसंपूर्णकरोतु कथंभूतंमधुसूदनस्यउरः पद्मेति पद्मायाः लक्ष्म्याः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri.

पयोधरस्तद्धीस्तनपरिसरस्तस्यपरिरंभणेन आलिंगनेनलग्नं यत्काश्मीरंकुंकुमंकेशरंतेनमुद्रितंचिन्हितं ममैवेदंवक्षः स्थलंनान्यस्यइतिभावः पुनःकथंभूतमिव व्यक्तानुराग मिव पुनःकथंभूतंउरः खेलदिति खेलन्खेलनगतिंकुर्वन्योऽनंगस्तस्यखेदेनस्फुरतायासेनस्वेदांबुपूरोघर्मजलप्रवाहोयत्र ॥१॥

श्लोकः॥ वसंते वासंतीकुसुमसुकुमारैरवयवैर्भ्रमंतीं कांतारे बहुविहितकृष्णानुसरणाम्॥ अमंदं कंदर्पज्वरजनितचिंताकुलतया चलद्बाधां राधां सरसमिदमूचे सहचरी॥२॥

अधुनाविरहोत्कंठितायाः राधायाःकाचित्सखीकृष्णवार्तांवक्तुमाह वसंतइति वसंतकालेकाचित्सहचरीसखी सरसं सविलासंइदंवक्ष्यमाणंराधांप्रत्यूचे अवदत् कथंभूतांराधां वासंतीकुसुमसुकुमारैर्माधवीपुष्पकोमलैरवयवैरंगैरुपलक्षितांउपलक्षणेतृतीया कथंभूतांराधांकांतारे दुर्गमेवर्त्मनिभ्रमंतीं पुनःकथंभूतांबहुविहितंवारंवारंदूतीद्वारेणकृतंकृष्णानुसंधानंयया पुनःकथंभूतां अमंदंअत्युत्कंठंयथास्यात्तथाकंदर्पज्वरेणजनिताउत्पादितायाचिंतातत्कृतायाआकुलतातयाकृत्वाचलंतीउद्गच्छंती बाधापीडायस्याः॥२॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi: Digitized by eGangotri

अथ तृतीयप्रबंधो वसंतरागेण
रूपकताले गीयते

ललितलवंगलतापरिशीलनकोमलम
लयसमीरे॥ मधुकरनिकरकरंबितको-
किलकूजितकुंजकुटीरे॥१॥ विहरति हरि
रिह सरसवसंते॥ नृत्यति युवतिजनेन
समं सखि विरहिजनस्य दुरंते॥ ध्रु०॥

पूर्वोक्तमर्थंगीतेनाह ललितेति एतस्य प्रबंधस्य वसंत रागः रूपकतालः तल्लक्षणं शिखंडबर्होच्चयबद्धचूडः पुष्णान्पिकंचूतलतांकुरेण भ्रमन्मुदावासमनंगमूर्तिर्मत्तोमतंगस्यवसंतरागइति हेसखिहरिः इहसरसवसंतेविहरतियुवतिजनेनसमंनृत्यतिचेतिध्रुवगतपदेनान्वयः हेराधेहरिः कृष्णः इह अस्मिन्मनोहरवसंतसमयेक्रीडति युवतिजनेनसमं कामिनीसमूहेन सहनर्तनंकरोतिच. कुत्रस्थलेइत्यपेक्षायांसप्तमपद्यस्थितवृंदावनविपिनशब्देनान्वयः कीदृशे विरहिजनस्यदुरंतेदुःखेनापिगंतुमशक्ये इतिवसंतवृंदावनयोर्विशेषणं कीदृशेवसंतसमये ललितेत्यादि सप्तपदीपदानि. वसंतसमयविशेषणानि ललितायाः मनोहरायाः लवंगलतायाः लवंगशाखायाः परिशीलनेनसंपर्केणकोमलोगंधमनोहरःमलयसमीरोमलयानिलोयत्र अनेनवायोः सुगंधत्वेनशीतत्वादीन्युक्तानि मधुकरेति मधुकरनिकरेण

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

भ्रमरसमूहेन करंबितैर्म्मिश्रितैः कोकिलैःकूजितःश
ब्दितः कुंजएवलतागृहमेवकुटीरोऽल्पाकुटीयत्र ॥१॥

उन्मदमदनमनोरथपथिकवधूजनज
नितविलापे॥ अलिकुलसंकुलकुसुम
समूहनिराकुलबकुलकलापे॥२॥

उन्मदेति उद्धतौमदमदनौहर्षकामौयत्र एवंभूतोम
नोरथोयस्य एवंभूतोयः पथिकवधूजनः पांथस्त्रीजन
स्तेनोत्पादितोविलापः परिदेवनंयत्र अलिकुलेति अलि
कुलैः भ्रमरसमूहैः संकुलोव्याप्तः कुसुमसमूहस्तेननि
राकुलोनिःशेषेण आकुलः बकुलानांवृक्षाणां कलापः
समूहोयत्र॥२॥

मृगमदसौरभरभसवशंवदनवदल
मालतमाले॥युवजनहृदयविदारणम
नसिजनखरुचिकिंशुकजाले॥३॥

मृगमदेति मृगमदस्यकस्तूरिकायाः सौरभरभस
वशंवदासुरभितोत्साहस्यायत्तवादिनी नवानूतनादल
मालापत्रपंक्तिर्येषां ईदृशास्तमालायत्र नूतनपत्रस्तमा
लोमृगमदगंधमनुकरोतीतियुवजनेति युवजनानांत
रुणजनानांहृदयंविदारयतिएवंविधोयोमनसिजःकंदर्प
स्तस्य यानिनखानितद्वत्रुचिर्दीप्तिर्येषांएवंभूतानांकिं
शुकानांपलाशपुष्पाणांजालंसमूहोयत्र॥३॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

मदनमहीपतिकनकदंडरुचिकेशरकुसुमविकाशे॥ मिलितशिलीमुखपाटलिपटलकृतस्मरतूणविलासे॥ ४॥

मदनेति मदनमहीपतेः कामनृपस्यकनकदंडछत्रंतद्रुचिर्यस्य एवंभूतः केशरकुसुमविकाशोनागकेशरपुष्पप्राचुर्ययत्र मिलितेति मिलिताः शिलीमुखाः भ्रमराः येषुतैः पाटलीपटलैः पाटलपुष्पसमूहैः कृतः स्मरतूणविलासः कामतूणीरचेष्टितंयस्मिन्‌तस्मिन्॥ ४॥

विगलितलज्जितजगदवलोकनतरुणकरुणकृतहासे॥ विरहिनिकृंतनकुंतमुखाकृतिकेतकिदंतुरिताशे॥ ५॥

विगलितेति विगलितस्यशिथिलावयवस्य अतएवलज्जितस्यजगतः अवलोकनेनदर्शनेनतरुणकरुणैः तरुणकरुणवृक्षैः पुष्पविकाशव्याजेनकृतोहासो हास्यंयत्र विरहीति विरहिनिकृंतनानिवियोगिमारकानिकुंतमुखाकृतीनिभल्लमुखाकाराणियानिकेतकीपुष्पाणि तैर्दंतुरिता व्याप्ताआशादिशोयस्मिन्‌तस्मिन्॥ ५॥

माधविकापरिमलललिते नवमालतिजातिसुगंधौ॥ मुनिमनसामपि मोहनकारिणि तरुणाकारणबंधौ॥ ६॥

माधविकेति माधविकायाः वासंतीलतायाः परिमले

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

नगंधेन ललितेमनोहरे नवमालिकानिमालतीपुष्पाणिजातिः जातिपुष्पाणिताभ्यांस्रगंधौ मुनिमनसामपिऋषिचित्तानामपिमोहनकारिणिमदनजनके तरुणानांयूनां अकारणबंधौसहजमित्रे ॥६॥

स्फुरदतिमुक्तलतापरिरंभणमुकुलितपुलकितचूते॥वृंदावनविपिने परिसर परिगतयमुनाजलपूते॥७॥

स्फुरदितिवृंदावनविपिनेहरिः क्रीडतीत्यन्वयःस्फुरंत्याश्चलंत्या अतिमुक्तलतायाः परिरंभणेन आलिंगनेनमुकुलितः पुष्पितः पुलकितःहृष्टः आम्रवृक्षोयत्र कथंभूते वृंदावनविपिने परिसरेति परिसरंपर्यंतभुविपरिगतंप्राप्तंयत् यमुनाजलंतेनपूतेपवित्रे॥७॥

श्रीजयदेवभणितमिदमुदयतु हरिचरणस्मृतिसारं॥सरसवसंतसमयवनवर्णनमनुगतमदनविकारं॥८॥

इति श्रीगीतगोविंदे तृतीयप्रबंधः३

श्रीजयदेवेति श्रीजयदेवकवेरिदंभणितं उदयतु उदयंप्राप्नोतुइत्यर्थः हरिचरणयोः स्मृतिःस्मरणंसारोमुख्यो यत्र सरसंस्रमनोहरं वसंतसमयसंबंधिनो वनस्यवर्णनंयत्र अनुगतः अनुकृतः मदनविकारोकामविलासोयस्मिन्॥८॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

श्लोकः॥ दरविगलितमल्लीवल्लिचंचत्परा
गप्रकटितपटवासैर्वासयन् काननानि॥
इह हि दहति चेतः केतकीगंधबंधुः प्रसर
दसमबाणप्राणवद्गंधवाहः ॥१॥

वियोगिनांदुःसहंवसंतवायुंवर्णयति दरेति इहवसंते गंधवाहोवायुः विरहिणांचेतः दहतीत्यन्वयः अर्थात् किंकुर्वन् दरविगलितायाः ईषद्विकसितायाः मल्याः मल्लिकाया वल्लीषुलतासु चंचद्भिरुद्गच्छद्भिः परागैःपुष्परजोभिः प्रकटितपटवासैः स्फुटीकृतपटवासचूर्णैः काननानिवनानि वासयन् सुरभीकुर्वन् पुनःकथंभूतः केतकीपुष्पाणांगंधस्य बंधुर्मित्रंप्रसरंतोये असमबाणाः कामबाणास्तेषांप्राणवत् प्राणइव॥१॥

श्लोकः॥ उन्मीलन्मधुगंधलुब्धमधुपव्या
धूतचूतांकुरक्रीडत्कोकिलकाकलीकलक
लैरुद्गीर्णकर्णज्वराः॥ नीयंते पथिकैः क
थंकथमपि ध्यानावधानक्षणप्राप्तप्राण
समासमागमरसोल्लासैरमी वासराः॥२॥

वसंतवासराणामनंगोद्दीपकत्वमाह उन्मीलदिति अमीवसंतसंबंधिनोवासराः दिवसाः पथिकैर्मार्गस्थैर्विरहिभिः कथंकथमपि अत्यंतदुःखेननीयंते उल्लंघ्यंते कथंभूताः वासराः उन्मीलदिति उन्मीलंश्चासौमधुगंधश्चपुष्परसगंधस्तत्र

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

लुब्धायेमधुपाः भ्रमरास्तैर्व्याधूताः कंपिताः येचूतांकुराः आम्रांकुरास्तेषुक्रीडतांकोकिलानांकाकलीकलकलैः सूक्ष्माव्यक्तमधुरध्वनि कोलाहलैः कष्टजनकत्वेनउद्गीर्णः प्रकाशितः कर्णज्वरः श्रवणोपतापोयेषु कथंनीयंतइत्यतआह- ध्यानेचिंतने अवधानंचित्तैकाग्र्यंतेनक्षणंअल्पकालं प्राप्ताया अनुभूतायाः प्राणसमायाः समागमरसेनसंबंध स्वरूपरसेन उल्लासोयेषांते॥ २॥

श्लोकः॥ अनेकनारीपरिरंभसंभ्रमस्फुरन्मनोहारिविलासलालसं॥ मुरारिमारादुपदर्शयंत्यसौ सखी समक्षं पुनराह राधिकां॥ ३॥

अनेकेति असौसखीराधिकांपुनराहइत्यन्वयः कथंभूतासखी आरात्दूरे वर्तमानं समक्षंयथास्यात्तथाकृष्णंउपदर्शयंती विषयंकोरयंती कथंभूतंहरिं अनेकनारीणांपरिरंभसंभ्रमेणालिंगनादरेणस्फुरन् इतस्ततोगच्छन् मनोहारीमनोज्ञोयोविलासः क्रीडातत्रलालसं आदरवंतं ३

## अथ चतुर्थप्रबंधो रामकरिरागेण रूपकताले गीयते.

चंदनचर्चितनीलकलेवरपीतवसनवनमाली॥ केलिचलन्मणिकुंडलमंडितगंडयुगस्मितशाली॥ १॥ हरिरिह मुग्ध

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

वधूनिकरे विलासिनि विलसति केलिपरे ॥ध्रु०॥

अमुमेवश्लोकोक्तमर्थंगीतेनाह चंदनेतिरामकरिरागः तस्यलक्षणं स्वर्णप्रभाभास्वरभूषणाचनीलंनिचोलंस्वत नौवहंती कांतोपदोपांतमधिश्रितापिमनोन्नतारामकरिः प्रदिष्टाइति १ हेविलासिनिराधे इहमुग्धवधूनिकरेमनोह रकामिनीसमूहे हरिर्विलसति क्रीडतीत्यन्वयः कथंभूतेमु ग्धवधूनिकरे केलिपरेक्रीडातसरे कथंभूतोहरिः चंदनेति चंदनेनमलयजेन चर्चितंरेखाकारेणांगुलिभिर्नीलंकलेवरं शरीरंयस्य पीतंसुवर्णवर्णवसनंवस्त्रंयस्यवनमालायस्या स्तीति ततः प्रत्येकंकर्मधारयः पुनःकथंभूतः केल्याक्री डयाचलतीयेमणियुक्तेकुंडलेताभ्यांमंडितंशोभितंगंड युगंयस्यस्मितेनईषद्धास्येनशालतेशोभतेततः कर्मधारयः

पीनपयोधरभारभरेण हरिं परिरभ्य सरागं ॥ गोपवधूरनुगायति काचिदु दंचितपंचमरागं ॥२॥

पीनेति हेराधेकाचित्गोपवधूःगोपांगनापीनपयोध रभारभरेण विपुलकुचगौरवातिशयेनसरागंयथातथाप रिरभ्य आलिंग्यहरिं अनुपश्चाद्दूर्ध्वीकृतंपंचमरागंगायति गानंकरोति ॥२॥

कापिविलासविलोलविलोचनखेलन

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

जनितमनोजं ॥ ध्यायति मुग्धवधूर-
धिकं मधुसूदनवदनसरोजं ॥ ३ ॥

कापीति काचिन्मुग्धवधूर्मनोहरगोपांगना अधिकमतिशयेनमधुसूदनवदनसरोजंकृष्णास्यमुखांबुजंध्याय-तिचिंतयति विलासेनविलोलयोर्विलोचनयोःखेलनेन संचारेणजनितउत्पादितोमनोजः कामोयेनतत् ॥ ३ ॥

कापि कपोलतले मिलिता लपितुं कि
मपि श्रुतिमूले ॥ चारु चुचुंब नितंबवती
दयितं पुलकैरनुकूले ॥ ४ ॥

कापिकपोलेति कापिनितंबवतीगोपांगनादयितंकृष्णं कपोलतले गंडदेशेचारुमनोज्ञंयथास्यात्तथाचुचुंबचुंबितवती कथंभूताकिमपिकार्यंलपितुं वक्तुं श्रुतिमूलेकर्णप्रदेशे मिलितासंलग्ना कीदृशेकपोलतले पुलकैरोमोद्गमैः अनुकूलेप्रेमप्रियकथने ॥ ४ ॥

केलिकलाकुतुकेन च काचिदमुं य
मुनाजलकूले ॥ मंजुल वंजुल कुंजग
तं विच कर्ष करेण दुकूले ॥ ५ ॥

केलीति काचिद्गोपीकेलिकलाकुतुकेनशृंगाररसक्रीडातात्पर्येण हेतुनाकरेण हस्तेनामुंकृष्णंदुकूलेवस्त्रेविचकर्ष आकृष्टवती कथंभूतंअमुं यमुनाजलकूले यमुनाजलोपलक्षिते कूलेतीरेमंजुलोमनोहरोयोवंजुलकुंजो

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

वेतसलतागृहंतत्रगतंवर्तमानं ॥ ५ ॥

करतलतालतरलवलयावलिकलितक
लस्वनवंशे ॥ रासरसे सह नृत्यपरा हरि
णा युवतिः प्रशशंसे ॥ ६ ॥

करतलेति काचित्युवतिः गोपांगनाहरिणाकृष्णेनप्र
शशंसेस्तुता रासरसेगोपीक्रीडानुरागेसहनृत्यपराकृष्णा-
समकालंनृत्यंती कथंभूतेरासरसे करतलयोर्हस्तयोस्ता
लेनचपेटध्वनिनातरलयाचंचलयावलयावल्या कंकणपं-
क्त्याकलितः मिश्रितः कलस्वनवंशोऽव्यक्तमधुर शब्दसहि
तोवंशोवेणुर्यत्र ॥ ६ ॥

श्लिष्यति कामपि चुंबति कामपि रमय
ति कामपि रामां ॥ पश्यति सस्मितचारु
परामपरामनु गच्छति वामां ॥ ७ ॥

श्लिष्यतीति हेराधेश्रीकृष्णः कामपिगोपिकांश्लिष्य-
ति आलिंगति तथाकामपिचुंबति तथाकामपिरामांर
मयतिक्रीडयति अपरांनायिकांस्मितचारु हासमनोह
रंयथास्यात्तथापश्यति अपरांवामांसुंदरीमनुगच्छतीत्य
र्थः ॥ ७ ॥

श्रीजयदेव कवेरिदमद्भुतकेशवकेलि
रहस्यं ॥ वृंदावनविपिने ललितंवितनो
तु शुभानि यशस्यं ॥ ८ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

इति श्रीगीतगोविंदे चतुर्थः प्रबंधः

श्रीजयदेवेति श्रीजयदेवकवेरिदंगीतं शुभानि कल्याणानिवितनोतु अर्थात् भक्तानां गीतंकीदृशं अद्भुतं आश्चर्यकरं केशवस्यकृष्णस्यकेलिरहस्यंक्रीडाहर्षीयत्र अद्भुतत्वंयुगपत्सर्वासांप्रीत्युत्पादनात् वृंदावनविपिनेवृंदावननाम्निवनेललितंनानारसान्वितमित्यर्थः यशस्यंयशसेहितंयशस्करमित्यर्थः ॥८॥

श्लोकः ॥ विश्वेषामनुरंजनेन जनयन्नानंदमिंदीवरश्रेणीश्यामलकोमलैरुपनयन्नंगैरनंगोत्सवं ॥ स्वच्छंदं व्रजसुंदरीभिरभितः प्रत्यंगमालिंगितः शृंगारः सखि मूर्तिमानिव मधौ मुग्धो हरिः क्रीडति ॥१॥

विश्वेषामिति हेसखिराधेमधौवसंते मुग्धोमनोहरोहरिः कृष्णः क्रीडतीत्यन्वयः कइवमूर्तिमान् शरीरधारीशृंगाररसइव किंकुर्वन् अनुरंजनेन अनुरागेण विश्वेषांसर्वेषांभक्तानां आनंदंसंतोषंजनयन् पुनः किंकुर्वन् इंदीवरश्रेणीनामिव नीलकमलपंक्तीनामिवश्यामलकोमलैः कृष्णमनोहरैरंगैरवयवैः अनंगोत्सवंकामहर्षंउपनयन्उत्पादयन् पुनः कथंभूतः स्वच्छंदंस्वेच्छया व्रजसुंदरीभिः गोपीभिः अभितः सर्वतोभावेन

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

प्रत्यंगंप्रत्यवयवं आलिंगितः गोपीभिरालिंगनेययायदं गंप्राप्तंतयातदेवालिंगितमितिभावः श्यामोभवतिशृंगारः सितोहासः प्रकीर्तितइतिशृंगारविशेषणान्यप्येतानिपदानि॥१॥

श्लोकः॥ अद्योत्संगवसद्भुजंगकवलक्लेशादिवेशाचलप्रालेयप्लवनेच्छयानुसरतिश्रीखंडशैलानिलः॥ किंचित्स्निग्धरसालमौलिमुकुलान्यालोक्य हर्षोदयादुन्मीलंति कुहुः कुहूरिति कलोत्तालाः पिकानांगिरः॥२॥

मलयानिलदुःसहत्वेकारणमाह अद्येति हेराधे अद्यइदानींवसंतसमये श्रीखंडशैलानिलः मलयजपवनः उत्संगेक्रोडेवसंतोयेभुजंगाः सर्प्पास्तेषांकवलक्लेशादिवग्रासोपतापादिव ईशाचलंहिमाचलंप्रालेयप्लवनेच्छयातुहिनमज्जनेच्छयानुसरति अनुगच्छतिकिंच पक्षांतरेपिकानां गिरोवाण्यः स्निग्धरसालमौलिमुकुलानि कोमलचूतस्तबककुड्मलानि आलोक्यदृष्ट्वाहर्षोदयात् आनंदोदयात् उन्मीलंति उद्गच्छंति कथंभूतागिरः कुहुःकुहूरितिकलोत्तालाः कुहुःकुहूरित्याकारेणाव्यक्तमधुरशब्देनोत्तालाः प्रकाशाः॥२॥

श्लोकः॥ रासोल्लासभरेण विभ्रमभृता

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

माभीरवामभ्रुवामभ्यर्णं परिरभ्य निर्भ
रमुरः प्रेमांधया राधया ॥ साधु त्वद्वदनं
सुधामयमिति व्याहृत्य गीतस्तुतिव्या-
जादुद्भटचुंबितः स्मितमनोहारी हरिः
पातु वः ॥ ३ ॥

इति श्रीकविराजश्रीजयदेवकृते गीतगोविंदे
महाकाव्ये सामोददामोदरो नाम प्रथमः सर्गः १

कविः कथोपक्रमंत्यक्त्वा लोकानाशिषयति रासोल्ला
सेति हरिः कृष्णः वः युष्मान्पातुइत्यन्वयः कथंभूतोहरिः
रासोल्लासभरेण गोपीक्रीडायां हर्षातिशयेन विभ्रमभृतां
शृंगारविलासधारिणीनां आभीरवामभ्रुवां गोपिकानां
अभ्यर्णसमीपंनिर्भरंगाढंयथातथाउरः वक्षःस्थलंपरिर
भ्य आलिंग्यराधयाउद्भटंप्रकटंयथास्यात्तथा गीतस्तुति
व्याजात् गानप्रशंसाछलेनचुंबितः नतुभवतुतास्तुविभ्र
मः प्रत्यक्षंयुवतिगणंपश्यंत्यातया कथंचुंबितस्तत्राह
प्रेमांधयाप्रेम्णाहर्षातिशयेनांधया कृष्णंविनान्यन्नपश्यं
तीतितया किंकृत्वा त्वद्वदनंत्वन्मुखंसुधामयममृतमयंसा
धुशोभनं इतिव्याहृत्यउक्त्वा कथंभूतोहरिः स्मितमनोहा-
रीराधायाः चुंबनकौशलंदृष्ट्वा स्मितेनईषद्धास्येनमनोह
र्तुंशीलंयस्यसः ॥ ३ ॥ ॥ इतिश्रीगीतगोविंदटीकायां
प्रथमःसर्गःसमाप्तः ॥ १ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

## अथ द्वितीयसर्गः प्रारभ्यते.

श्लोकः॥ विहरति वने राधा साधारणप्र
णये हरौ विगलितनिजोत्कर्षादीर्ष्याव-
शेन गतान्यतः॥ क्वचिदपि लताकुंजे
गुंजन्मधुव्रतमंडलीमुखरशिखरे ली-
ना दीनाप्युवाच रहः सखीं॥१॥

विहरतीति राधारहः एकांतेसखींउवाच कथंभूताराधा वनेवृंदावनेहरौ कृष्णेविहरतिक्रीडतिसति विगलितनि-जोत्कर्षान् गतनिजभाग्यात् ईर्ष्यावशेन असहिष्णुतया अन्यतोन्यस्मिन्स्थलेगता कथंभूतेहरौ साधारणप्रणये- अन्यगोपीतुल्यप्रेम्णि अतएवक्वचिदपि लताकुंजेलतागृहे लीनागुप्ता कथंभूतेकुंजे गुंजतांगंभीरंशब्दंकुर्वताम् मधुव्रतानांभ्रमराणां मंडल्यासमूहेन मुखरशिखरेशब्दायमानाग्रभागे अतएवदीनापिदुःखितापि॥१॥

### अथ पंचमप्रबंधो गुर्जरीरागेण रूपकताले गीयते.

संचरदधरसुधामधुरध्वनिमुखरितमो
हनवंशं॥ चलितदृगंचलचंचलमौलिक
पोलविलोलवतंसं॥१॥ रासे हरिमिह वि
हितविलासं स्मरति मनो मम कृतपरि-
हासम्॥ ध्रु०॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

श्लोकोक्तमर्थंगीतेनाह संचरदिति हेसखिममनः ह रिंस्मरतिगोचरंकरोति सर्वानुभूतविषयत्वात् कथंभूतंह रिं संचरताउद्गच्छताअधरसुधयामधुरेणअधरामृतमनो हरेणध्वनिनाशब्देन मुखरितः शाब्दितोमोहननामावं शोयेन पुनःकीदृशंचलितेति चलितः आवर्जितःदृगंच लः कटाक्षोयेन चंचलः दोलायमानोमौलिः शेखरोय स्य कपोलयोर्गंडस्थलयोर्विलोलो चंचलौवतंसौकर्णाभ रणौयस्य तं ततः प्रत्येकं कर्मधारयः पुनः कीदृशंइहरासे गोपीक्रीडायांविहितःकृतः विलासो क्रीडायेनमयासह कृतःपरीहासः कर्म येनतम् ॥१॥

चंद्रकचारुमयूरशिखंडकमंडलवल यितकेशं ॥प्रचुरपुरंदरधनुरनुरंजित मेदुरमुदिरसुवेशं॥२॥

चंद्रकेति चंद्रकेणविचित्रवर्णचिन्हेन चारूणांम- यूरशिखंडकानांमयूरपिच्छानां मंडलेनसमूहेन वल यिताःवलयाकारेण वेष्टिताः केशाःयेन अतएवप्र- चुरेणविस्तीर्णेनपुरंदरधनुषा इंद्रधनुषा अनुरंजित- श्चित्रितोमेदुरोनिबिडःस्निग्धोयोमुदिरोमेघस्तद्वत्सु वेशं सुंदरम् ॥२॥

गोपकदंबनितंबवतीमुखचुंबनलंभि तलोभं॥बंधुजीवमधुराधरपल्लवमु

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

ल्लसितस्मितशोभं ॥ ३ ॥

गोपेति गोपकदंबस्य गोपसमूहस्य नितंबवतीनां-स्त्रीणां मुखचुंबने न लंभितः लोभो येन पुनः कीदृशं बंधुजीवपुष्पवत् मधुरो मनोहरोऽधरपल्लव ओष्ठपल्लवो यस्य पुनः कीदृशं उल्लसितेन विकासिनेन स्मितेन शोभा यस्य तम् ॥ ३ ॥

विपुलपुलकभुजपल्लववलयितबल्लवयुवतिसहस्रं ॥ करचरणोरसिमणिगणभूषणकिरणविभिन्नतमिस्रं ॥ ४ ॥

विपुलेति विपुलाः बहुलाः पुलका रोमोद्गमा ययोस्ताभ्यां भुजपल्लवाभ्यां वलयितं वेष्टितं बल्लवानां आभीराणां युवतिसहस्रं गोपिकावृंदं येन पुनः कीदृशं करौ चरणौ उरश्च एषां समाहारः करचरणोरस्तस्मिन् वर्तमानानां मणिगणयुक्तभूषणानां किरणेन दीप्त्या विभिन्नं नाशितं तमिस्रमंधकारो येन सः तं ॥ ४ ॥

जलदपटलचलदिंदुविनिंदकचंदनतिलकललाटं ॥ पीनपयोधरपरिसरमर्दननिर्दयहृदयकपाटम् ॥ ५ ॥

जलदेति पुनः कीदृशं हरिं जलदपटले मेघसमूहे चलतः इंदोश्चंद्रस्य विनिंदकं समानं चंदनतिलकं चंदनकृततिलकं यत्र ना दृशं ललाटं यस्य अभूतोपमेयं कचिज्ज

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

लदपटलचलदिंदुविनिंदकचंदनबिंदुललाटमितिपाठः तदाजलदपटलेचलन्संचरन् यइंदुश्चंद्रस्तस्यविशेषेण निंदकस्तिरस्कारकः चंदनबिंदुर्मंडलाकृतितिलकोललाटे यस्यतं पुनःकीदृशं पीनौमांसलौयौपयोधरौस्तनौतयोः परिसरस्यपर्यंतदेशस्यमर्दनेनिर्दयंदयारहितं हृदयकपाटंकपाटवद्विस्तीर्णं हृदयंयस्यतादृशं ॥ ५ ॥

मणिमयमकरमनोहरकुंडलमंडितगं
डमुदारं ॥ पीतवसनमनुगतमुनिम-
नुजसुरासुरवरपरिवारं ॥ ६ ॥

मणिमयेति मणिमयेनमणिरूपेणमकरवन्मनोहराभ्यांकुंडलाभ्यांमंडितोलंकृतोगंडोगंडस्थलंयस्य पुनःकीदृशंमहांतं उदारंअभीष्टदातारं वापुनःकीदृशंपीतंवसनंवस्त्रंयस्य महत्त्वमाह अनुगताआश्रितायेमुनिवराःशुकनारदादयः मनुजाः परीक्षिदादयः सुरब्रह्मरुद्रादयः असुराःप्रल्हादादयस्तेपरिवाराःपरिजनाःयस्यतादृशंइद्धांतेवरपदस्यतेषांवराइतिग्रहणं ॥ ६ ॥

विशदकदंबतले मिलितं कलिकलुष
भयं शमयंतं ॥ मामपि किमपि तरंग
दनंगदृशा मनसा रमयंतं ॥ ७ ॥

विशदेति विशदकदंबतलेमिलितंउपस्थितं पुनःकीदृशं कलिकलुषात्कलिकालजातपापाद्भयंतन्नाशयंतं पु

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

नःकीदृशंमांअपिकिमपिअनिर्वचनीयंयथास्यात्तथात रंगन्उद्गच्छन्अनंगयोगोयस्यांतादृश्यादृष्ट्यामनसाहृद येनचरमयंतं॥७॥

श्रीजयदेवभणितमतिसुंदरमोहनम धुरिपुरूपं॥ हरिचरणस्मरणं प्रति संप्र ति पुण्यवतामनुरूपं॥८॥ इति श्री गीतगोविंदे पंचमः प्रबंधः॥५॥

श्रीजयदेवेति श्रीजयदेवभणितंपुण्यवतांभक्ता- नांहरिचरणयोः स्मरणंप्रतिअनुरूपंयोग्यंभवतुइत्य ध्याहारः कथंभूतं अतिसुंदरंमोहनंमोहकारकं मधुरि पोःरूपंकृष्णास्यरूपंयस्मिन्॥८॥

श्लोकः॥गणयति गुणग्रामं भ्रामं भ्र मादपि नेहते वहति च परीतोषं दोषं विमुंचतिदूरतः॥ युवतिषु चलत्तृष्णो कृष्णो विहारिणि मां विना पुनरपि म नोवामं कामं करोति करोमि किं॥१॥

इदानींराधायाः कृष्णोवसतश्चेतसोवश्यत्वमाह हेस खि ममम्नश्चित्तंपुनरप्यधुनापिकृष्णोकाममिच्छांकरोति किंकरोमिनिवृत्तोउपायांतरंनास्तीत्यर्थः युवतिषुगोपीषु चलत्तृष्णेजाताभिलाषे पुनःकीदृशे मांविनाविहारिणि- क्रीडाशीले कीदृशंमनःवामंअवशमित्यर्थः वामत्वेकारण

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

माह ममममनःसापराधस्यापिकृष्णास्यगुणग्रामंगुणसमू हंगणयतिभ्रमादपिग्रामंविस्मरणंनेहते नचेष्टते भाामम पीतिपाठे भाामंक्रोधंनेहतेनवांछति तद्गुणाकर्णनेनंपरि तोषंसंतोषंवहतिदोषंमदीयावज्ञादिकंदूरतएवसुंचतिप रित्यजति॥१॥

## अथ षष्ठप्रबंधो मालवरागेण एक तालीताले गीयते.

निभृतनिकुंजगृहंगतया निशि रहसि नि
लीय वसंतं॥ चकितविलोकितसकलदि
शा रतिरभसभरेण हसंतं॥१॥ सखि हे
केशिमथन मुदारं रमय मया सह मदन
मनोरथभावितया सविकारं॥ ध्रु०॥

पुनरपिराधागीतेनसखीमाह. निभृतेति हेसखित्वंके शिमथनं कृष्णंमयासहरमयक्रीडांकारय कीदृशंकृष्णं उदारंमहांतं कथंभूतयामया मदनस्यमनोरथः इच्छा- स्मिन्भावोरत्याख्यःसंजातोयस्याः कथंभूतंकृष्णं सवि कारं भावसहितं कीदृश्यामया निभृतंगूढंयन्निकुंजगृ हं तत्रगतया प्राप्तया कथंभूतंकृष्णं निशिरात्रौरहसिए कांतस्थलेनिलीयतिरोहितोभूत्वावसंतंतिष्ठंतं कथंभूत यामया चकितंसभयंयथातथाविलोकितादृष्टाःसक लदिशोययापुनःकथंभूतंकृष्णं रतेरभसउत्साहस्तस्य

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

भरेण आधिक्येनहसंतंसस्मितमुखं अस्मिन्गीते पूर्वार्द्धंराधाविशेषणंउत्तरार्द्धंकृष्णस्येति बोद्धव्यं॥१॥

प्रथमसमागमलज्जितया पटुचाटुश-
तैरनुकूलं॥मृदुमधुरस्मितभाषितया
शिथिलीकृतजघनदुकूलं॥२॥

प्रथमेति प्रथमसमागमेन नूतनसान्निध्येनलज्जितया लज्जायुक्तया कथंभूतंकृष्णंवैलक्ष्यदूरीकरणाय पटुचाटुशतानि कुशलानियानिचाटुशतानिस्तव शतानि तैरनुकूलंआनुकूल्यकारकं मृदुकोमलंमधुरंस्मितपूर्वकंभाषितंयस्याः सातया शिथिलीकृतं जघनदुकूलंजघनस्थितंपट्टवस्त्रंयेनतं॥२॥

किसलयशयननिवेशितया चिरमुरसि
ममैव शयानं॥कृतपरिरंभणचुंबनया
परिरभ्य कृताधरपानं॥३॥

किसलयेति किसलयशयनेपल्लवकृतशय्यायांनिवेशितया कथंभूतंकृष्णं ममैवोरसिवक्षःस्थलेचिरंशयानं कृतालिंगनमित्यर्थः कथंभूतयामया कृतंपरिरंभणपूर्वकं आलिंगनपूर्वकंचुंबनंययासातया कथंभूतंकृष्णंपरिरभ्य आलिंग्यकृतंअधरपानंओष्ठपानंयेनसः तं॥३॥

अलसनिमीलितलोचनया पुलकाव
लिललितकपोलं॥श्रमजलसिक्तक-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

लेवरया वरमदनमदादतिलोलं ॥४॥

अलसेति अलसेनस्फुरतसौख्येननिमीलितेमुद्रिते नेत्रेयस्याः सातयापुलकावल्यारोमांचपंक्त्यालिलितौम- नौहरौकपोलौयस्यतं श्रमजलेनस्फुरतश्रमजनितेनवा रिणासिक्तं कलेवरंशरीरंयस्यास्तया वरमदन मदातउन्त मकामजनितहर्षात् अतिलोलं अतिचंचलंसतृष्णमि त्यर्थः ॥४॥

कोकिलकलरवकूजितया जितमनसि जतंत्रविचारं॥ श्लथकुसुमाकुलकुं तलया नखलिखितघनस्तनभारं॥५॥

कोकिलेति कोकिलकलरववत् अव्यक्तध्वनिवत् कूजितंशब्दोयस्यास्तयाजितः मनसिजस्यकामस्यतं त्रविचारः शास्त्रसिद्धांतोयेनसः तं श्लथाः शिथिलाः कुसुमैः पुष्पैराकुलाः व्याप्ताः कुंतलाः चूर्णकुंतलाय- स्याः सातया नखेनलिखितश्चिन्हितोघनोनिबिडः स्तनभारोयेनसः तं ॥५॥

चरणरणितमणिनूपुरया परिपूरितसु रतवितानं॥ मुखरविसृंखलमेखलया सकचग्रहचुंबनदानं॥६॥

चरणेति चरणयोः पादयोःरणितोशब्दितोमणियु क्तनूपुरोयस्याः परिपूरितंसंपूर्णीकृतंसुरतवितानं सुरत

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

समूहोयेनतं मुखरा शब्दायमानाविशृंखलाउन्मुक्तामे खलाकांचीयस्याः सातया सकचग्रहं कचग्रहणसहितंचुं बनदानंयस्यतं ॥ ६ ॥

**रतिसुखसमयरसालसया दरमुकु-**
**लितनयनसरोजं॥ निःसहनिपतिततनु**
**लतया मधुसूदनमुदितमनोजं॥ ७॥**

रतिसुखेति रतिसुखसमयेसुरतसुखकालेप्रीत्या अलसयाआलस्ययुक्तयादरमुकलितनयनसरोजंईषन्मी-लितनेत्रकमलं निःसहं असमर्थेनिपतितातनुलताशरीर लतायस्यास्तया कथंभूतंकृष्णं मधुंदैत्यंसूदयतीति तंउ दितः जातोमनोजः कामोयस्यतं॥ ७॥

**श्रीजयदेवभणितमिदमतिशयमधुरि**
**पुनिधुवनशीलं॥ सुखमुत्कंठितराधि-**
**कया कथितं वितनोतु सलीलं॥ ८॥**

**इति श्रीगीतगोविंदे षष्ठः प्रबंधः**

श्रीजयदेवेति इदंश्रीजयदेवेनभणितंउक्तंगीतंकर्तृ सुखंपारलौकिकसुखानिऐहिकानिचवितनोतुविस्तारयतु केषांगायतांशृण्वतांच कथंभूतंश्रीजयदेवभणितं अ-तिशयमधिकंमधुरिपोः कृष्णस्यनिधुवनशीलंसुरतच रितंयस्मिन् पुनः कीदृशं उत्कंठितयागोपवध्वाराधिकया कथितं सलीलंशृंगाररसक्रियासहितं॥ ८॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

श्लोकः॥हस्तस्रस्तविलासवंशमनृजुभ्रूव
ल्लिमद्बल्लवीवृंदोत्सारिदृगंतवीक्षितमति
स्वेदार्द्रगंडस्थलं॥मामुद्वीक्ष्य विलज्जित
स्मितसुधामुग्धाननं कानने गोविंदं व्र
जसुंदरीगणवृतं पश्यामि हृष्यामि च १

अधुनात्युत्कंठयासख्यानीयमानासागोपीगणवृ
तंकृष्णंदृष्ट्वापरावृत्यसखीमाह हस्तेति हेसखि गोविंदं
अहंपश्यामिहृष्यामि हर्षंप्राप्नोमिचपश्यामीतिवर्तमा
नसामीप्याद्वर्तमानता कथंभूतंगोविंदं काननेवृंदाव
नेव्रजसुंदरीगणेनगोपीसमूहेनवृतंवेष्टितं ननुसपत्नी
भिः परिवृतंदृष्ट्वाकथंते हर्षइत्यतआह मांउद्वीक्ष्य
दृष्ट्वाहस्तात्स्रस्तोव्यस्तोविगलितःविलासवंशःक्रीडा
वंशोयस्यतंअनृजुभ्रूवल्लिमतीनांकुटिलभ्रूलतायुक्ता
नांगोपीनांसमूहेउत्सारिऊर्द्ध्वतिर्यग्गामिदृगंतेनकटाक्षे
णवीक्षितमीक्षणंयस्यतं मय्यागतायांभियादृगंत
चेष्टयान्यगोपीरपसारयंतमितिभावः अतिस्वेदेना-
तिघर्मेणार्द्रंगंडस्थलंयस्यतंविलज्जितस्मितंसलज्जाहा
स्यंतदेवसुधामृतंतयामुग्धमाननंमनोहरंमुखंयस्यतं॥१॥

श्लोकः॥दुरालोकस्तोकस्तबकनव
काशोकलतिकाविकाशः कासारो
पवनपवनोपि व्यथयति॥अपि भ्रा

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

भ्यद्भृंगीरणितरमणीयानमुकुलप्रसूति
श्चूतानां सखि शिखरिणीयं सुखयति२

पुनः विभावयन्नाह दुरालोकेति हेसखिदुरालोक्यतेवि
योगिनामुद्वेगजनकत्वात् स्तोकोल्पः स्तबकः गुच्छोयस्य
नवाशोकलतिकायाः विकाशः उद्योतः मांव्यथयतिपीडय
ति किंच कासारोपवनस्यसरोवरनिकटवनस्यपवनोपि
मांव्यथयति कासारइत्यनेनवायोः शैत्यंउपवनसंबंधि
त्वेनसौगंध्यंवृक्षैरुपहतगतित्वेनमांद्यंचध्वनितं अपिचचूता
नामाम्राणांइयं मुकुलप्रसूतिः कलिकोद्भेदोमांनसुखयति
कथंभूताप्रसूतिः भ्राम्यंतीनांचलंतीनांभ्रमरांगनानांर
णितैः शब्दितैः रमणीयामनोज्ञापीत्यर्थः शिखरिणीप्र
शस्ताग्रभागवतीभृंगीणांचलनंनायकान्वेषणार्थमितिध्व
नितं शिखरिणीनामकं छंदइतीदंसूचितं॥२॥

श्लोकः॥साकूतस्मितमाकुलाकुलगल
द्धम्मिल्लमुल्लासितभ्रूवल्लीकमलीकदर्शि
तभुजाबालार्द्धहस्तस्तनं॥गोपीनां निभृ
तं निरीक्ष्य ललितां काश्चिच्चिरं चिंतयन्नं
तर्मुग्धमनोहरो हरतुवः क्लेशं नवः के
शवः॥३॥ ॥इतिश्रीकविराजश्रीजय
देवकृतेगीतगोविंदेमहाकाव्ये अक्लेश
केशवोनामद्वितीयः सर्गः॥२॥ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

अधुनाकविः लोकानाशिषयति साकूतेति नवः शृंगारस्तरुणोवाकेशवः वःयुष्माकंभक्तानांक्लेशंदुः खंहरतुदूरीकरोतु कीदृशः साकूतंसाभिप्रायंस्मितमीषद्धास्यंयत्र गोपीनांनिभृतंगोपीभावंनिरीक्ष्यदृष्ट्वा कांचिद्दयितां अंतर्मनसिचिरंचिंतयन् मुग्धमनोहरः मोहयुक्तसंदरः कथंभूतंनिभृतं आकुलाकुलोत्यंतास्तव्यस्तःगलन्उन्मुक्तीभवन्धम्मिल्लःकेशपाशोयत्रउल्लासिताउच्चैःकृताभ्रूवल्लीयत्र अलीकेनजृंभणादिच्छलेनदर्शिताःभुजाबालार्द्धहस्तस्तनायस्मिन् भुजेचबालाश्चार्द्धहस्तौचस्तनौचेतिद्वंद्वः ॥३॥ ॥

इतिश्रीगीतगोविंदटीकायांद्वितीयःसर्गः ॥२॥ ॥

## अथ तृतीयसर्गः प्रारभ्यते.

श्लोकः॥ कंसारिरपि संसारवासनाबंधशृंखलां ।राधामाधाय हृदये तत्याज व्रजसुंदरीः॥१॥

एवंराधायाःविरहमुक्त्वा कृष्णस्यापिविरहव्यथातस्यामाह कंसेति कंसारिरपिकृष्णोपिराधांहृदयेमनसिआधायस्थाप्य व्रजसुंदरीर्गोपीस्तत्याजत्यक्तवान् कीदृशींराधांसंसारेवासनासंस्कारस्तस्याबंधायशृंखलांनिगडरूपांसौंदर्यवतीर्बह्वीरपितत्याजेतिराधायांकृष्णस्यानुरागातिशयोध्वनितः॥१॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

श्लोकः॥ इतस्ततस्तामनुसृत्य राधिका मनंगबाणव्रणखिन्नमानसः॥ कृतानुतापः स कलिंदनंदिनीतटांतकुंजे निषसाद माधवः॥२॥

पुनः किंकृतवान् इतस्ततेति समाधवः कलिंदनंदिन्याः यमुनायास्तटांतकुंजेतीरलतागृहेनिषसादस्थितवान् किंकृत्वा इतस्ततअनेकस्थानेषुतांराधिकांअनुसृत्यान्वेष्य कीदृशः अनंगबाणव्रणेनकामशरक्षतेनखिन्नंदीनंमनोयस्यकृतोनुतापःपश्चात्तापोयेनसः॥२॥

अथ सप्तमप्रबंधः गुर्जरीरागेण प्रतिमंठताले गीयते.

मामियं चलिता विलोक्य वृतं वधूनिचयेन॥ सापराधतया मयापि न वारितातिभयेन॥१॥ हरिहरिहतादरतया गता सा कुपितेव॥ध्रु०॥

कृतानुतापत्वमेवाहगीतेन मामिति गीतस्यास्यगुर्जरीरागः प्रतिमंठतालः तयोर्लक्षणंप्राक्कथितं हरिहरीतिखेदानुकारेसाराधाहतादरतया हृतबहुमानत्वेन कुपितेवकोपं प्राप्तेवगताअन्यस्थानेगता ननुसाकुपितात्वयाकथंज्ञातातत्राह मांकृष्णंवधूनिचयेनगोपीसमूहेनवृतंवेष्टितं विलोक्यचलिताइतोगंताइतिभिन्नैव

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

वाक्यरचनातर्हिसागच्छंतीत्वयाकिंननिवारितातत्राह मया पिकृष्णेनापि सापराधतयाकृतापराधत्वेन हेतुनाअतिभ येननवारिता यद्वाकथंभूतेनमयाअतिभयेनातिशयि तंभयंयस्येति॥ १॥

किंकरिष्यतिकिंवदिष्यतिसाचिरंविरहे णकिंजनेनधनेनकिंममजीवितेनगृहेण२

किंकरिष्यतीति साराधाचिरंविरहेणचिरकालमद्वि योगेन किंकरिष्यतिविरहतापशांत्यर्थकमुपायंकरिष्यती त्यर्थः किंवदिष्यति ननुएतावतातस्यामेवकोवाग्रहः अ न्यगोपीजनस्य धनादिनाचित्तव्यावर्तनंकर्तव्यंतत्राह तां राधांविनाममजनेनलोकेन किं तद्वियोगेनसर्वजनपरि- त्यागात् धनेनकिं ननुधनंविनागृहसौख्यं नस्यात्तत्राह गृहेण किंप्रयोजनं नकिमपि तद्वियोगेनवनवासांगीकारा त् ननुसुखास्पदं गृहंविनासुखं नस्यात्तत्राह ममसु- खेनकिंतांविना सर्वंनिष्फलमित्यर्थः सैवमेसुखरूपे तिभावः॥२॥

चिंतयामितदाननंकुटिलभ्रुरोषभरेण॥ शोणपद्ममिवोपरिभ्रमताकुलंभ्रमरेण॥३

चिंतयामीति अहंतस्याःराधायाः आननंमुखंचिंत- यामिस्मरामि कीदृश माननं रोषभरेणक्रोधातिशयेन कु टिलेवक्रेभ्रुवौयत्र किमिव उपरिभ्रामशोणपद्ममिव अत्र

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

रोषारुणेमुखे शोणपद्मसादृश्यंबोध्यं वारंवारंरोषाद्रूक्षी भवंत्योर्भ्रुवोर्भ्रमदलिभ्रमरोपमाबोध्या ॥३॥

तामहंहृदिसंगतामनिशंभृशंरमयामि॥किं वनेनुसरामितामिहाकिंवृथाविलपामि॥४॥

तामिति अहंहृदिसंगतांराधांअनिशंवारंवारंभृशमति शयेनरमयामि क्रीडयामीतिभावः इहवनेतांराधांकिमनुस रामिहृदिसंगतत्वादेववृथाव्यर्थमेवकिंविलपामिविलापंक रोमि॥ ४ ॥

तन्विखिन्नमसूययाहृदयंतवाकलया मि।तन्नवेद्मिकुतोगतासिनतेनतेनु नयामि॥५॥

हृदिसंगतांतांप्रत्याह तन्वीति हेतन्वि असूययाअ सहिष्णुत्वेनदुःखितंतवहृदयंआकलयामि तर्कयामितत्त- स्मादहं नवेद्मिनजानेकुतःकुत्रगतासीति तेनकारणेनते तुभ्यं अनुनयामि अप्रसादयामिक्रियार्थोपपदमितिचतुर्थी तेइति॥ ५॥

दृश्यसेपुरतोगतागतमेवमेविदधासि किंपुरेवससंभ्रमंपरिरंभणंनददासि॥६॥

दृश्यसेइति हेराधेत्वंममपुरतः अग्रेगतागतंगमनागम नमेवविदधासिकरोषीतिदृश्यसे तर्हिंपुरेवपूर्ववत्ससंभ्र मंसवेगंपरिरंभणमालिंगनंकिंकेन कारणेन नददासि वि

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

रहिणोहिचित्तानुषंगात्सर्वतस्तामेवपश्यंति ॥ ६ ॥

क्षम्यतामपरंकदापितवेदृशंनकरोमिदे
हिसुंदरिदर्शनंममम्न्मथेनदुनोमि ॥ ७ ॥

क्षम्यतामिति हेसुंदरिपूर्वकृतमपराधंक्षम्यतां अपर मीदृशंतवापराधंकदापिनकरोमिनकरिष्यामि अतएव ममदर्शनंदेहि यतः अहंमन्मथेनकामेनदुनोमिपीडामनुभवामि ॥ ७ ॥

वर्णितं जयदेवकेन हरेरिदं प्रणतेन ॥ किं
दुबिल्वसमुद्रसंभवरोहिणीरमणेन ॥ ८ ॥

इति श्रीगीतगोविंदे सप्तमः प्रबंधः

वर्णितमिति जयदेवकेनस्वार्थेकः इदंगीतंवर्णितं कीदृशेनजयदेवकेन हरेः प्रणतेनकृष्णास्याराधनपरेणपुनः कीदृशेन किंदुबिल्वंजयदेवकुलंतदेवसमुद्रस्तस्मात्संभवो यस्य एतादृशोरोहिणीरमणश्चंद्रइव यथासागरादुत्पन्नश्चंद्रस्तथाकिंदुबिल्वोत्पन्नो जयदेवइति यद्वा किंदुबिल्वशासनं ॥ ८ ॥

श्लोक ॥ हृदि बिसलता हारो नायं भुजं
गमनायकः कुवलयदलश्रेणी कंठे न सा
गरलद्युतिः ॥ मलयजरजो नेदं भस्म प्रि
यारहिते मयि प्रहर न हरभ्रांत्यानंग
क्रुधा किमु धावसि ॥ १ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

इदानींकामएवमेदुःखंप्रयच्छतीतितमुपालंभगोचरंकरो-
मीत्याशयेनाह हृदीति हेअनंगत्वंमयिहरभ्रांत्यामहादे
वभ्रमेण नप्रहरमाप्रहारं कुरुक्रुधाकोपेन किमुकिमिति
धावसिमारयितुंधावनंकरोषि कीदृशेमयिप्रियारहिते
राधावियोगिनिमयिहरभ्रांत्या नप्रहरप्रहारंमांकुरु स
र्वदाप्रियायुक्तो अहंत्वधुनाप्रियारहितइतिमयिहरभ्रमो
नयुक्तइतिभावः हरभ्रांतिंपरिहरति हेकाममममहृदिबि
सलतायाः हारोमृणाललतायाहारस्तद्विरहजन्यसंताप
शांत्यर्थंधृतः नायंभुजंगमनायकः शेषः इयंमेकंठेकुव
लयदलानांनीलोत्पलानां श्रेणीपंक्तिः शैत्यायधृतानतु
सागरलघुतिर्हालाहलदीप्तिः इदंमलयजरजोचंदनले
पोसर्वांगे तापशांत्यर्थंधृतंनतुभस्मविभूतिः ॥१॥

श्लोकः॥पाणौ मा कुरु चूतसायकममुं
मा चापमारोपय क्रीडानिर्जितविश्व मू-
र्छितजनाघातेन किं पौरुषं॥तस्या एव मृ
गीदृशो मनसिज प्रेंखत्कटाक्षानिलज्वा
लाजर्जरितं मनागपि मनो नाद्यापि संधु
क्षते॥२॥

पुष्पसायकत्वेनकामः प्रसिद्धोतः इमान् चूतमंजरीरू
पानेवबाणान्धनुष्यारोप्यमांताडयिष्यतीतिशंकयापुनर-
पिकामायैवदैन्यंकरोति पाणाविति हेक्रीडानिर्जितविश्व

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

क्रीडयालीलयाजितंभुवनंयेनसः असुंचूतसायकंआम्र पुष्पबाणंपाणौहस्तेमाकुरु चापंधनुःमारोपय सशरंमाकुरु हस्तेपिचेत्करोषितर्ह्यसुंसायकंमासंधेहीत्यर्थः हेमनसिज मदन अतःमूर्छितस्य मूर्च्छांप्राप्तस्यमादृशाजनस्याघातेनपीडयाकिंतेपौरुषंकस्तवपुरुषार्थःनकिमपीत्यर्थः मूर्छितत्वेकारणमाह तस्याएवमृगीदृशो हरिणीनयनायाः तस्याएवेतिविरहाधिक्येनराधानामग्रहणाशक्तिःप्रतिपाद्यते प्रेंखंतोच्चलतो कटाक्षाएवानलाः वन्हयस्तेषांश्रेण्यापंक्त्याजर्जरितंखंडखंडीभूतंममम नःमनागपिस्वल्पमपि नाद्यापिसंधुक्षतेस्वस्थंनभवति क्वचित्कटाक्षाशुगेतिपाठः तदाकटाक्षएवाशुगाबाणाः॥२॥

श्लोकः॥ भ्रूपल्लवो धनुरपांगतरंगितानि बाणा गणः श्रवणपालिरिति स्मरेण ॥ तस्यामनंगजयजंगमदेवतायामस्त्राणि निर्जितजगंति किमर्पितानि॥३॥

ननुतत्कटाक्षादिचिंतनादेवतवदुःखंभवतिमदनस्यतर्हिकोपराधस्तत्राह भ्रूपल्लवइति इतीत्थंप्रकारेणस्मरेण कामेनतस्यां राधायां अस्त्राणि अर्पितानि स्थापितानिकिं तर्कयामि किंवितर्केनत्वस्त्राणि वीरेणस्वहस्तेस्थापयितुमुचितानिनत्वन्यत्रेत्याह निर्जितानि जगंतियैस्तानि तैरवास्त्रैर्जगत्त्रयंजित्वा तत्रस्थापितानीतिभावः तर्ह्यन्य-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

त्रकिंस्थापितानीत्याह अनंगस्यकंदर्पस्यजये त्रैलोक्यविजयेजंगमदेवतायांगमनशीलदेवतारूपायां इतीतिकिं भ्रूपल्लवोभ्रूलतातदेवधनुः अपांगतरंगितानि कटाक्षनिरीक्षणानिएवबाणाः श्रवणपालिः कर्णप्रदेशःएवगुणः प्रत्यंचा ३

श्लोकः॥ भ्रूचापे निहितः कटाक्षविशिखो निर्मातु मर्मव्यथां श्यामात्मा कुटिलः करोतु कबरीभारोपि मारोद्यमं॥ मोहं तावदयं च तन्वि तनुतां बिंबाधरो रागवान् सद्वृत्तस्तनमंडलस्तव कथं प्राणैर्मम क्रीडति ॥ ४ ॥

अधुनामनोविषयीकृतांराधांप्रतिस्वीयंदुःखमाह भ्रूचापइति हेतन्विकृशांगि भ्रूचापेभ्रुवावेवचापोधनुस्तत्रनिहितः अर्पितःकटाक्षविशिखः कटाक्षबाणः मर्मव्यथांमर्मपीडांतावन्निर्मातुकरोतुं विशिखस्यमर्मव्यथाजनकत्वंयुज्यतएवेतिभावः अनुचश्यामात्माश्यामवर्णः कुटिलः वक्राकारः कबरीभारोपि केशसमूहोपिमारोद्यमं कामोन्मत्यंतावत्करोतु योंतर्मलिनः कुटिलश्चभवतिसोन्यमारणाययत्तएवेतिसूचितं अयंचबिंबाधरः बिंबोष्ठः मोहंतनुतां विस्तारयतां कथंभूतोबिंबाधरः रागवान्लोहितवर्णः रागिणोविषयिणः मोहोममत्वंयुज्यतएव सद्वृत्तः साधुवर्तुलः तवस्तनमंडलःममप्राणैः कथंक्रीडति

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

ये सद्वृत्ताः सन्मार्गप्रवर्तकास्तेतु परप्राणघातकाः नभवंति विरोधनामालंकारः ॥ ४ ॥

श्लोकः ॥ तानि स्पर्शसुखानि ते च तरला स्निग्धा दृशोर्विभ्रमास्तद्वक्त्रांबुजसौरभं स च सुधास्यंदी गिरां वक्रिमा ॥ सा बिंबाधरमाधुरीति विषयासंगेपि मन्मानसं तस्यां लग्नसमाधि हंत विरहव्याधिः कथं वर्तते ॥ ५ ॥

तानीति तान्येवस्पर्शसुखानि यानिपुरानायिकासंगमानुभूतानि एतेनत्वगिंद्रियविषयलाभः तेचतरलाश्चंचलाः स्निग्धाः प्रेमान्विताः दृशोश्चक्षुषोर्विभ्रमाविलासाः एतेनरूपं तदेववक्त्रांबुजसौरभंवदनकमलसुरभित्वं एतेनगंधत्वं सचसुधास्यंदी अमृतद्रवयुक्तः गिरांवचसां यः वक्रिमावक्रत्वंएतेनशब्दः साचबिंबाधरमाधुरीबिंबसदृशोष्ठमाधुर्यंतदेव एतेनरसः इत्येवंप्रकारेणविषयासंगेपितस्यारूपरसस्पर्शादीनांसान्निध्येपिममगमानसंमनस्तस्यांराधायां लग्नसमाधि प्राप्तस्थानंचेद्यदि तदाहंत इति खेदेविरहव्याधिः व्यथाकथंवर्ततेध्यानयुक्तस्ययोगिनोव्याधिनाशात् ॥ ५ ॥

श्लोक ॥ तिर्यक्कंठविलोलमौलितरलोत्तंसस्य वंशोच्चरद्गीतस्थानकृतावधान

ललनालक्षैर्न संलक्षिताः ॥ संमुग्धं मधु सूदनस्य मधुरे राधामुखेंदो मृदुस्पंदं कंद लिताश्चिरं ददतु वः क्षेमं कटाक्षोर्मयः ६

इतिश्रीकविराजश्रीजयदेवकृतेगीतगो विंदे महाकाव्येमधुसूदनोनाम तृतीयः सर्गः ॥ ३ ॥

अधुनाकविः सर्गांतेभक्तानाशिषयति तिर्यक्कंठेति मधुसूदनस्यकृष्णास्यकटाक्षोर्म्मयः कटाक्षदर्शनतरंगाः वः युष्माकं भक्तानांक्षेमंकल्याणंददतु प्रयच्छंतु कीदृशाः मधुरेसुंदरे राधायाः मुखमिंदुरिवतस्मिन् संमुग्धं अव्यक्तं मृदुस्पंदंकिंचिच्चलनंचयथास्यात्तथा पल्लविताः इंदुदर्शनात्तरंगाः अतीव भवंतीतिकटाक्षाणांतरंगसाम्यं नन्वन्यास्वपश्यंतीषु कथंराधामुखचंद्र एवपल्लविताउर्म्मयः अतआह वंशादुच्चरत्कवेणोर्निर्गच्छत्कगीतस्थानेषु गानपदेषु कृतावधानैर्दत्तमनोभिर्ललनालक्षैर्गोपांगनासहस्रैर्नसंलक्षिताः नज्ञाताः कथंभूतस्यमधुसूदनस्यतिर्यग्वक्रः कंठोयस्यविलोलश्चंचलोमौलिर्मस्तकः किरीटोवायस्य तरलश्चंचलउत्तंसः अवतंसोयस्यसः पश्चात्कर्मधारयः लक्षपदंबहुत्वोपलक्षकं मुग्धोहरिर्विरहीत्यर्थः ॥ ६ ॥

अथ चतुर्थः सर्गः प्रारभ्यते.

श्लोक ॥ यमुनातीरवानीरनिकुंजे मंद

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

मास्थितम् ॥ प्राह प्रेमभरोद्भ्रांतं माधवं राधिकासखी ॥ १ ॥

इदानींराधासखीकृष्णंप्रत्याह यमुनेति राधिकायाः सखीमाधवंकृष्णंवक्ष्यमाणंप्राह उक्तवतीकीदृशंमाधवंयमुनायास्तीरेयः वानीरकुंजः वेतसोपलक्षितंलतागृहंतस्मिन् मंदंतूष्णीं आस्थितं आसीनंपुनः कीदृशं प्रेम्णाराधायां प्रेमातिशयेनउद्भ्रांतं उद्विग्नचित्तं कथंमयिप्रसादंयास्यतीत्युद्भ्रांतं ॥ १ ॥

अथ अष्टमप्रबंधः कर्णाटकरागेण एकतालीताले गीयते.

निंदति चंदनमिंदुकिरणमनुविंदति खेदमधीरं ॥ व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीरं ॥ १ ॥ सा विरहे तव दीना माधव मनसिजविशिखभयादिव भावनया त्वयि लीना ॥ ध्रु० ॥

उक्तश्लोकार्थंगीतेनाह निंदतीति अस्यकर्णाटकरागः तल्लक्षणं कपोलपाणिर्गजदंतपत्रमेकंवहन् दक्षिणकर्णपूरे संस्तूयमानः सुरचारणौघैः कर्णाटकरागः सितनीलकंठः इति अत्रगीतेविरहोत्कंठावर्णनीया वासकशय्यासोत्कंठास्वाधीनभर्तृकातथा कलहांतरिताचापिविप्रलब्धानसारिका खंडिताप्रोषिताचैववनिता श्चाष्टसंमृताः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

तत्रोत्कंठालक्षणंभरतोक्तं यस्याःसमुचितेप्यन्हिप्रवा
सीनैतिवल्लभः सास्मरानलसंतप्ताविरहोत्कंठितामता
इतिगीतार्थस्तुहेमाधवसाराधातवविरहेसतिदीनादुःखि
तात्वयित्वद्विषयेभावनया अनुचिंतनेनकामबाणः कृ
ष्णाहृदयेप्रविश्यस्थितांमांनपीडयिष्यतीति भावनयाली
नाप्रविष्टा कस्मादिव मनसिजविशिखभयादिव केन
प्रकारेणेत्याह हेकृष्णसाराधाचंदनंनिंदति इंदुकिरण
चंद्रदीधितिं अनुलक्षीकृत्य अधीरंअनल्पखेदंविंदति
लभते मलयसमीरं मलयवातंव्यालनिलयंसर्पस्थानं चं
दनवृक्षस्तस्यामिलनेन स्पर्शनेनगरलमिव विषमिवक
लयतिमन्यते ॥ १ ॥

अविरलनिपतितमदनशरादिव भवदव
नाय विशालं ॥ स्वहृदयमर्मणि वर्म करोति
सजलनलिनीदलजालं ॥ २ ॥

अविरलेति हेकृष्णसाराधास्वहृदयमर्मणिसजलन-
लिनीदलजालं सजलकमलिनीपत्रसमूहमेववर्मतनुत्रंक
रोति कस्मैप्रयोजनाय भवदवनायस्वहृदयस्थितस्यभव
तोरक्षणाय कस्मादिवअविरलंनिरंतरंपतितोयोमदनश
रः कामबाणस्तस्मादिव कीदृशंवर्मविशालंविस्तीर्णं तं
स्याहृदयेसर्वदाइतिभावः ॥ २ ॥

कुसुमविशिखशरतल्पमनल्पविलास

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

कलाकमनीयं॥ व्रतमिव तव परिरंभसु
खाय करोति कुसुमशयनीयं॥ ३॥
कुसुमेति कुसुमशयनीयंपुष्पशय्यांकरोति कीदृ
शं अनल्पविलासकलाभिः बहुतरक्रीडाकलाभिः कम
नीयंसुंदरं पुष्पशय्यास्वयमेवमनोज्ञा इयंशय्याविरचना
कुशलाशय्याभावेपुष्पशय्यांकरोतीत्यर्थः कमिव कुसुम
विशिखःकामस्तस्यशराः पुष्पाणितान्येवतल्पंशय्याता
दृशं व्रतमिवशरशय्याशयनरूपं दारुणंव्रतमितिभावःकि
मर्थंव्रतमित्यतआह. तवपरिरंभसुखाय आलिंगनसु
खंप्राप्तुमित्यर्थः॥ ३॥
वहति च गलितविलोचनजलधरमा
ननकमलमुदारं॥ विधुमिव विकटवि
धुंतुददंतदलनगलितामृतधारं॥ ४॥
वहतीति साराधाउदारंमनोज्ञं आननकमलंवह
तिधारयति कीदृशंचलितंउच्छ्वसितंयद्विलोचनजलंनेत्रा
श्रुतद्धारयतीति कमिव विधुमिव कीदृशंविधुं विकटेनदा
रुणेन महताविधुंतुदस्यराहोर्दंतेनदलनाद्दलितामृतधा-
रायस्मात्॥ ४॥
विलिखति रहसि कुरंगमदेन भवंतमस
मशरभूतं॥ प्रणमति मकरमधो विनिधा
य करे च शरं नवचूतं॥ ५॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

विलिखतीति हेकृष्ण साराधा असमशरभूतंकंदर्पस्वरूपंभवंतंत्वां रहसिएकांतेकुरंगमदेन मृगमदेन कस्तूरिकया विलिखति अधःकामरूपस्यभवतोधस्तान्मकरंकामवाहनं विनिधायकृत्वाकरे हस्तेनवचूतं नूतनाम्ररूपं शरंबाणंचविनिधायसंस्थाप्य प्रणमतिपूजानंतरं प्रणामोयुज्यतएव मकरस्यध्वजत्वे प्रसिद्धेवाहनत्वेपिनदोषः॥ ५॥

प्रतिपदमिदमपि निगदति माधव तवच
रणे पतिताहं॥त्वयि विमुखे मयि सपदि
सुधानिधिरपि तनुते तनुदाहं॥ ६॥

प्रतिपदमिति हेकृष्ण साराधाप्रतिपदंप्रतिक्षणं इदमपि निगदति इदंकिं हेमाधव हेकृष्ण तवचरणे अहंपतिता किमित्यतआह त्वयिविमुखेपराङ्मुखेसति मयिसपदितत्क्षणं सुधानिधिरपि चंद्रोपि तनुदाहं शरीरपीडांतनुतेविस्तारयतियतश्चंद्रोप्येवंकुरुते अतस्तवचरणेपतिता॥ ६॥

ध्यानलयेन पुरः परिकल्प्य भवंतमती
व दुरापं॥ विलपति हसति विषीदति रोदि
ति चंचति मुंचति तापं॥ ७॥

ध्यानेति हेकृष्ण अतीवदुरापंदूतिद्वारापिदुर्लभं भवंतंध्यानलवेनचित्तैकाग्र्यविशेषेण पुरोग्रपरिकल्प्यकल्पनांकृत्वा मयिस्नेहंइदानीमपिनकरोतीतिविलापंकरोतीति हसति तवदर्शनेनविषीदति हास्यानंतरं आनर्थक्यात् अतएवरोदि

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

ति चंचतिस्थानांतरंगच्छतिस्थानांतरे आलिंगनादिकंक रिष्यतीति अतएवतापंमुंचतिमनस्तापंत्यजति॥ ७॥

श्रीजयदेवभणितमिदमधिकं यदि मनसा नटनीयं॥ हरिविरहाकुलबल्लवयुवतिसखीवचनं पठनीयं॥ ८॥

इति श्रीगीतगोविंदे अष्टमः प्रबंधः

श्रीजयदेवेति श्रीजयदेवेनभणितंकथितंगीतं मनसाचित्तेनअधिकंसातिशयंयदिनटनीयंनृत्तयितव्यं तदा हरिविरहेणकृष्णवियोगेनाकुलायाः बल्लवयुवत्याः राधायाः सखीवचनंगीतरूपंपठनीयंश्रीजयदेवगीतेष्विदमतिशयितव्यमिति भावः॥ ८॥

श्लोकः॥ आवासो विपिनायते प्रियसखीमालापि जालायते तापोपि श्वसितेन दावदहनज्वालाकलापायते॥ सापि त्वद्विरहेण हंत हरिणीरूपायते हा कथं कंदर्पोपि यमायते विरचयन् शार्दूलविक्रीडितं॥ १॥

गीतोक्तमर्थंश्लोकेनाह अवासइति हेकृष्ण हंतेतिखेदानुकारे साराधापित्वद्विरहेणभवद्वियोगेन हरिणीरूपायते मृगीरूपमिवाचरति कथमित्यतआह आवासः गृहंविपिनायतेवनमिवाचरतीति त्वद्विरहात् प्रियसखीमालापिस

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

रवीसमूहोपिस्वेच्छागमननिवारकतयाजालायते जालमिवाच रति तापोपिदेहदाहोपिश्वसितेनश्वासोच्छ्वासेनदावदहनज्वालाकलापायते अरण्यवन्हिज्वालापरंपरेवाचरति कंदर्पोपि कथंयमायतेयमइवाचरति हाशब्दःस्वात्मनोदुःखाधिक्यसूचनार्थः कीदृशः कंदर्पः शार्दूलविक्रीडितंव्याघ्रचेष्टितंविरचयन् मृगीमरणंशार्दूलादेवभवति॥१॥

अथ नवमः प्रबंधो देशाखरागेण एकताली ताले गीयते.

स्तनविनिहितमपि हारमुदारं॥ सा मनुते कृशतनुरिव भारं॥१॥ राधिका विरहे तव केशव॥ ध्रु०॥

इदानींसखीपुनरपिराधायादुःखचेष्टितंगीतेनाह स्तनेति गीतस्यास्यदेशाखरागः एकतालीतालः तल्लक्षणं आस्फोटनाविःष्कृतरोमहर्षो नियुद्धसन्नद्धविशालबाहुः हे केशवकृष्ण तवविरहेजातेसति साराधा एवंचेष्टते कीदृशामित्यतआह कृशतनुः विरहकृशशरीरासा स्तनविनिहितमपि- स्तनयोःस्थापितंउदारंबहुमूल्यं हारमपिभारमिवमनुते॥१॥

सरसमसृणमपि मलयजपंकं॥ पश्यति विषमिव वपुषि सशंकं॥२॥

सरसमिति साराधा सरसमसृणं सार्द्रंचिक्कणं द्रवरूपं मलयजपंकमपिचंदनलेपमपि वपुषिसशंकं विषमिवपश्यति

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

नवविरहात् ॥२॥

श्वसितपवनमनुपमपरिणाहं ॥ मदनदह
नमिव वहति सदाहं ॥३॥

श्वसितेति साराधाश्वसितपवनं निश्वासवायुं मदनदहन
मिव कामाग्निमिववहतिधारयति वायोरपिदाहकत्वात् की
दृशं अनुपमः उपमारहितः परिणाहोविशालतायस्यतं अति
दीर्घं सदाहं उष्णत्वाद्दाहयुक्तं ॥३॥

दिशि दिशि किरति सजलकणजालं ॥
नयननलिनमिव विगलितनालं ॥४॥

दिशीति साराधासजलकणजालं अश्रुबिंदुसमूहसहि
तं नयनमेवनलिनंपद्मंदिशिदिशिभवद्दर्शनवांछयाविकि
रतिक्षिपति कीदृशमिवविगलितदंडमिवसर्वतःपश्यतीत्य
र्थः ॥४॥

नयनविषयमपि किसलयतल्पं ॥ कलय
ति विहितहुताशविकल्पं ॥५॥

नयनेति साराधानयनविषयमपिनेत्रगोचरमपिकिसल
यतल्पंपल्लवशयनीयं नकलयतिनजानाति कथंभूतं विहि
तः कृतः हुताशस्याग्नेःविकल्पः संशयोयत्रतं अतिसंताप
जनकत्वात् तादृशंगणयति मनुते ॥५॥

त्यजति न पाणितलेन कपोलं ॥ बाल
शशिनमिव सायमलोलं ॥६॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

त्यजतीति सापाणितलेन हस्ततलेन कपोलं गंडस्थलं नत्यजति शंकितत्वात् कमिव सायंसंध्याकाले अलोलनिश्चलं बालशशिनमिव द्वितीया चंद्रमिव हस्तेनाच्छादितत्वात् संध्यासाम्यं ॥ ६ ॥

हरिरिति हरिरिति जपति सकामं ॥ विरहविहितमरणेव निकामं ॥ ७ ॥

हरिरिति सानिकाममतिशयेन सकामं साभिलाषं हरिर्हरिरितिजपति कथंभूतेचविरहेणत्वद्वियोगेनाविहितं कृतंमरणं यस्याः सेवअन्येपिमरणे हरिरिति मंत्रंजपंति ॥ ७ ॥

श्रीजयदेवभणितमिति गीतं ॥ स्फुरवयतु केशवपदमुपनीतं ॥ ८ ॥

इति श्रीगीतगोविंदे नवमः प्रबंधः

श्रीजयदेवोक्तं इतिपूर्वगीतं केशवएवपदं विश्रांतिस्थानं यस्य नतूभक्तं स्फुरवयतु कीदृशं उपनीतं उपास्थितीकृतं ॥ ८ ॥

श्लोकः ॥ सा रोमांचति सीत्करोति विलपत्युत्कंपते ताम्यति ध्यायत्युद्भ्रमति प्रमीलति पतत्युद्याति मूर्च्छत्यपि ॥ एतावत्यतनुज्वरे वरतनुर्जीवेन्न किं ते रसात्स्वर्वैद्यप्रतिमप्रसीदसि यदि त्यक्तोन्यथा हस्तकः ॥ १ ॥

अधुना सातवविरहेणावश्यंमृगयतिइतिसूचयन् शा-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

र्दूलविक्रीडितवृत्तेनश्लोकेनाह सारोमांचतीति हेस्वर्वैद्यप्र तिम अश्विनीकुमारतुल्य यदित्वंप्रसीदसि प्रसन्नोभवसि वरतनुःसुकुमारांगीसाराधाएतावति अतनुज्वरेसति तव रसात्किन्नजीवेत् अपिजीवेदेव रसःशृंगारः औषधंच अ न्यथाप्रसंगताभावे हस्तकः हस्तालंभस्त्यक्तः ज्वरेसतिए तेव्याधयोभवंति तेतस्यांवर्ततइत्याह साराधारोमांचतिस रोमांचाभवतीत्यर्थः सीत्करोतिसीत्कारशब्दंकरोतीत्यर्थः विलपति विलापंकरोति उत्कंपतेसकंपाभवतिक्लाम्यति- ग्लानियुक्ताभवतिध्यायति चिंतयति उद्भ्रमतिउच्चैर्भ्रांता भवति प्रमीलतिनेत्रनिमीलनंकरोति पततिशय्यादौगच्छ ति उद्यातिउच्चैर्गच्छतिमूर्च्छांप्राप्नोतिज्वरिणःपुरुषस्यए तावद्भवतीति॥१॥

श्लोक॥स्मरातुरां दैवतवैद्यहृद्य त्वदंग
संगामृतमात्रसाध्यां॥विमुक्तबाधां कुरु
षे न राधामुपेंद्र वज्रादपि दारुणोसि॥२

पुनरुपेंद्रवज्रावृत्तेनाह स्मरातुरामिति हेदैवत वैद्यवत् अश्विनीकुमारवत् हृद्यस्कंदर हेउपेंद्रइंद्रानुजत्वंराधांविमु क्तबाधांत्यक्तपीडांनकुरुषे अतोवज्रात्कुलिशादपि दा- रुणोसि अधिकविषमोसि स्मरातुरांकामार्तांपुनःकीदृ शींत्वदंगसंगस्तवशरीरसंबंधएवामृतंतन्मात्रेण साध्यांजी तिकार्यां॥२॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

श्लोकः॥ कंदर्पज्वरसंज्वराकुलतनोरा-श्चर्यमस्याश्चिरं चेतश्चंदनचंद्रमःकमलिनीचिंतास्र संताम्यति॥ किं तु क्षांतिवशेन शीतलतनुं त्वामेव मेकंप्रियं ध्यायंती रहसि स्थिता कथमसो क्षीणा क्षणं प्राणिति॥ ३॥

एवंविधापि राधात्वच्चिंतनेनैवजीवतीत्याह कंदर्पेति हेकृष्ण अस्याराधायाश्चेतोमनः चिरंचिरकालं चंदनस्य चंद्रमसःकमलिन्याश्चचिंतास्रस्मरणेष्वपिसंताम्यतिग्लानिं प्राप्नोति इदंमहदाश्चर्यं कीदृश्याः अस्याः कंदर्पज्वरेणतापेन यःसंज्वरः पीडातेनाकुलाचंचलातनुः शरीरंयस्यास्तस्याः किंतुरहसिएकांतेस्थितासोराधात्वामेवएकं असाधारणंप्रियंवल्लभंध्यायति क्षणंमुहूर्तंक्षांतिवशेनक्षांत्यावृत्ततयाल क्षांतिवशेनेतिपाठः नदाअस्मिन्क्षणेनायातः क्षणांतरेआगमिष्यतीति अनुरागेणकथंप्राणितिजीवतीति कथमिति प्रश्नेकीदृशीक्षीणाकृशांगी॥ ३॥

श्लोकः॥ क्षणमपि विरहः पुरा न सेहे नयननिमीलनखिन्नया यया ते॥ श्वसिति कथमसो रसालशाखां चिरविरहेण विलोक्यपुष्पिताग्रां॥ ४॥

पुनरपिउद्दीपनविभावेनविरहोद्रेकंपुष्पिताग्रावृत्तेनाह

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

क्षणमिति हेकृष्णा ययाराधयाते वियोगः पुरापूर्वंक्षणमपि नसेहेनसोढः कीदृश्याराधयानयनयोर्नेत्रयोर्निमीलनेन निरंतरदर्शनघाताच्चक्षुर्निमेषेण खिन्नयादुःखितयाऽसोराधाचिरविरहेण तवचिरवियोगेनकथंकेनप्रकारेणश्वसिति जीवतीतिनज्ञायते किंकृत्वावसंतेपुष्पितोग्रभागोयस्यास्तां रसालस्याम्रस्यशाखांविलोक्यदृष्ट्वा ॥ ४ ॥

श्लोकः ॥ वृष्टिव्याकुलगोकुलावनरसा-
दुधृत्य गोवर्धनं बिभ्रद्बल्लवसुंदरीभिरधि
कानंदाच्चिरं चुंबितः ॥ कंदर्पेण तदर्पिता-
धरतटीसिंदूरमुद्रांकितो बाहुर्गोपतनोस्त
नोतु भवतां श्रेयांसि कंसद्विषः ॥ ५ ॥

इति श्रीकविराजश्रीजयदेवकृते गीत
गोविंदे महाकाव्ये स्निग्धमाधवो
नाम चतुर्थः सर्गः

इदानींकथोपक्रमंत्यक्त्वा कविर्भक्तानाशिषयति शार्दूलविक्रीडितवृत्तेन वृष्टीति गोपतनोर्गोपशरीरस्यकंसद्विषः कृष्णस्यबाहुर्हस्तोभवतस्तवभक्तस्येत्यर्थः श्रेयांसिकल्याणानि तनोतुविस्तारयतु कथंभूतःबाहुः वृष्ट्याजलवर्षेण व्याकुलस्य दुःखितस्य गोकुलस्यगोपसमूहस्य अवनंपालनंतत्ररसोनुरागोवीर्यंवातस्माद्गोवर्द्धनंपर्वतंउद्धृत्यउत्सृत्यचिरंसप्ताहं बिभ्रत्धारयन् पुनःकीदृशः बल्लवीभिः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

गोपीभिरधिकानंदादतिहर्षाच्चुंबितः कंदर्पेणकामवशात्ता-
भिर्गोपीभिः अर्पिताः स्थापिताः अधरतटयएवसिंदूरचि
न्हानिलोहितत्वात् तैरंकितश्चिन्हितःस्निग्धितः स्नेहवा-
न् ॥ इतिगीतगोविंदटीकायांचतुर्थःसर्गः ॥ ४ ॥

## अथ पंचमः सर्गःप्रारभ्यते.

श्लोकः॥ अहमिह निवसामि याहि रा
धामनुनय मद्वचनेन चानयेथाः॥इति
मधुरिपुणा सखी नियुक्ता स्वयमिदमे-
त्य पुनर्जगाद राधाम्॥१॥

इदानींकृष्णप्रेरितासखीराधामाह अहमिति इतिमधुरि
पुणाकृष्णेननियुक्ताप्रेरितासखीस्वयमेत्य इदंवक्ष्यमाणंरा-
धांपुनर्जगादऊचे इतीतिकिं हेसखि अहमिहकुंजे निवसा
मिस्थितोस्मि त्वंराधांप्रतियाहि अनुनयच सांत्वय मद्वचने
नमद्वचसाराधामानयेथाश्च आनयस्वइति ॥ १ ॥

## अथ दशमप्रबंधो वराडिरागेण रूपकताले गीयते.

वहति मलयसमीरे मदनमुपनिधाय॥
स्फुटति कुसुमनिकरे विरहिहृदयद-
लनाय॥१॥ तव विरहे वनमाली सखि
सीदति॥ ध्रु०॥

मत्सखीजगादत्वदेवगीतेनाह वहतीति गीतस्यास्यव-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

राडीरागः रूपकतालः तल्लक्षणं विनोदयंती दयितंस्रकेशी स्रकंकणाचमरचालनेन कर्णेदधानास्ररपुष्पगुच्छं वरांगने यंकथितावराडी अभिसारिकानायिकावर्णनीयारसिकर सले संस्कृताप्राकृतामिष्टाततोपभ्रंशभाषणा॥ततःप्रिय तरावेश्यासर्वतश्चाभिसारिका इति तस्याः लक्षणंभरते- नोक्तं लज्जांहित्वासमाकृष्ययोवनेनमदेनवा अभिसारय तेकांतंकीर्तितासाभिसारिका गीतार्थस्तु हेसखिराधे त्वद्वि रहेत्वद्वियोगेवनमालीकृष्णः सीदति दुःखितोभवति कस्मि न्सति मदनं कामंउपनिधाय सहायंकृत्वामलयसमीरे द क्षिणसंबंधिनिपवनेवहतिसति विरहिणां वियोगिनां हृदय दलनाय आस्फोटनाय कुसुमानांनिकरेसमूहेस्फुटति सति विकसतिसति॥१॥

दहति शिशिरमयूखे मरणमनुकरोति ॥पतति मदनविशिखे विलपति विकल तरोऽति॥२॥

दहतीति हेराधे सः कृष्णः शिशिरमयूखे हिमकरे दह- तिसतिसंतापं जनयतिसति मरणमनुकरोति दशम्यवस्थाज नितपीडामनुभवतित्वत्प्राप्त्याशयाकष्टेनजीवनंधारयतीत्य र्थः मदनविशिखेकामबाणेपततिसति अतिविलपति अ तिशयेनविलापंकरोति कीदृशः कृष्णः विकलतरः वि व्हलतरः॥ २॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

ध्वनति मधुपसमूहे श्रवणमपिदधाति॥ मनसि वलितविरहे निशि निशि रुजमुपयाति॥ ३॥

ध्वनतीति मधुपिबंति तेमधुपाभ्रमरास्तेषांसमूहेध्वनतिशब्दंकुर्वति सति श्रवणंकर्णौअपिदधाति अंगुल्यग्रेणाच्छादयति मनसिवलितविरहेसति निशिनिशिप्रतिरात्रंरुजंपीडां उपयातिप्राप्नोति॥ ३॥

वसति विपिनविताने त्यजति ललितमपि धाम॥ लुठति धरणिशयने बहुविलपति तव नाम॥ ४॥

वसतीति साविपिनविताने अरण्यविस्तारे वसति तिष्ठति ललितमपिधामसुंदरमपिग्रहं त्यजति पृथ्वीशय्यायांलुठति विचेष्टते तवनामबहुअनेकवारंविलपति अथवाधाम शरीरं अखिललावण्यास्पदं श्रीविग्रहमपित्वांविनानाशास्तइत्यर्थः४

भणति कविजयदेव इति विरहविलसितेन॥ मनसि रभसविभवे हरिरुदयतु सुकृतेन॥ ५॥

इति श्रीगीतगोविंदे दशमः प्रबंधः

भणतीति कविजयदेवेइतिहरेःविरहस्यवियोगस्यविलसितेन विलासितेन भणतिसति वियोगचेष्टितं कथयति सतीत्यर्थः हरिः कृष्णः मनसिजयदेवसंबंधिचित्तेसुकृतेन

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

पूर्वार्जितपुण्येन हेतुना उदयतु उदयं प्राप्नोतु कीदृशे मनसिर-भसस्य हर्षस्य विभव आधिक्यं यस्मिन् ॥५॥

श्लोकः॥ पूर्वं यत्र समं त्वया रतिपतेरासादिताः सिद्धयस्तस्मिन्नेव निकुंजमन्मथमहातीर्थे पुनर्माधवः॥ ध्यायंस्त्वामनिशं जपन्नपि तवैवालापमंत्रावलीं भूयस्त्वत्कुचकुंभनिर्भरपरीरंभामृतं वांछति ॥१॥

किंच त्वत्प्राप्त्यर्थं तपः करोतीत्याह पूर्वमिति श्रीकृष्णः तस्मिन्नेव निकुंजमन्मथमहातीर्थे निकुंजमेव लतागृहमेवमन्मथमहातीर्थं कामतीर्थं तत्र पुनस्त्वां अनिशं वारंवारं ध्यायन् तवैव आलापमेव संभाषणमेव मंत्रावलीं मंत्राक्षरसमूहं जपन्निव भूयः पुनरपि त्वत्कुचकुंभनिर्भरपरीरंभामृतं त्वदीयस्तनकलशगाढालिंगनं पीयूषमिवामृतमिव वांछति तस्मिन्कस्मिन् यत्र महातीर्थे त्वया समं पूर्वं रतिपतेः कामस्य सिद्धयो मनोरथाः आसादिताः प्राप्ताः यथा सिद्धिं प्राप्यनंतरं मोक्षामृतं प्राप्यते तद्वत्॥१॥

अथ एकादशप्रबंधः केदाररागेण एकतालीताले गीयते.

रतिसुखसारे गतमभिसारे मदनमनोहरवेषं॥ न कुरु नितंबिनि गमनविलं-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

बनमनुसर तं हृदयेशं ॥ १ ॥ धीरसमीरे यमुनातीरे वसति वने वनमाली ॥ गोपी पीनपयोधरमर्दनचंचलकरयुगशाली ॥ ध्रु० ॥

इति पदार्थपाठः कुत्रचिदस्ति गोपीपीनपयोधरयोर्मर्दनेनचंचलेनकरयुगेनाढ्यः आढ्यः शालीतिविख्यातः हे राधे यमुनातीरेवनेयमुनातीरविषयेवने अथवावेतसवने वनमालीश्रीकृष्णोवसति किंभूतेवनेधीरः मंदः समीरः वायुर्यत्र एतेनवायोस्त्रैविध्यमुक्तं तस्याश्चस्थानोत्कंठाजनिता इतिध्रुवपदम् हेनितंबिनि त्वंतंवनमालिनमनुसर अनुगच्छ. गमनविलंबनं अभिसाराय कालातिक्रमंनकुरु माकृथाः हे नितंबिनि बृहन्नितंबत्वाच्चलितुंनशक्नोतीति तांत्वरयति किंभूतं रतिः संभोगस्तस्यसुखसारमुत्कृष्टंयत्र अभिस्त्रियतेऽस्मिन्नित्यभिसारः संकेतस्थानंतत्रगतंप्राप्तं पुनः कथंभूतं तव मनस्तदधीनमित्यर्थः अथवाहृदयेवर्तमानं तंवनमालिनमिति योज्यं किंभूतं आतुरेवेदमिति केवलसुखहेतुत्वात् शमेव अपिच ॥ १ ॥

नामसमेतं कृतसंकेतं वादयते मृदु वेणुं ॥ बहु मनुते तनुते तनुसंगतपवनचलितमपि रेणुं ॥ २ ॥

नामसमेतमिति हेराधेहरिः मृदुवेणुं कोमलवंशंवादयते

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

मृद्विति क्रियाविशेषणं कथंयथास्यात् तवनामाक्षरसंयुक्तं कृतसंकेतंयथास्यात्तथाचपुनः ततोवनेतनुसंगतपवनचलितं रेणुं अपिबहुमनुते कथंयथाभवति अतनुअनलंयथाभवति२

पतति पतत्रेविचलति पत्रे शंकितभवदु
पयानं॥रचयति शयनं सचकितनयनं
पश्यति तव पंथानं॥३॥

पततीति हेराधेकृष्णः शयनंरचयति तवपंथानंपश्यति कथंभवति सचकितनयनंयथास्यात् किंभूतं तवपंथानंशंकितंभवत्याउपयानंआगमोयत्रतंपुंवद्भावः भवतीशब्दस्यपुंस्त्वं कसति पतत्रे पक्षिणिपतति वृक्षांतरंगच्छति सतिपुनः कसतिवृक्षपत्रेचलतिसति॥ ३॥

मुखरमधीरं त्यजमंजीरं रिपुमिव केलि
सु लोलं॥चल सखि कुंजं सतिमिरपुं
जं शीलय नीलनिचोलं ॥४॥

हेसखिराधे त्वंकुंजंचल अभिसारानुरूपां सामग्रींशिक्षयति मंजीरंनूपुरंत्यज किंभूतंनूपुरं अधीरंअज्ञं अतएव मुखरं वाचालं अभिसारोचितं नजानाति अथवासाध्वेतन्मंजीरस्य मुखरस्यचत्तोनिमित्तवन्नैमित्तिकं कुतः मंजीरं अधुनावित्युसत्वे पुनःकिंभूतं केलौक्रीडायां सुलोलं अत एवरिपुमिव अपिच नीलनिचोलंनीलं कृष्णं वस्त्रंशीलयपरिधेहिकिं भिन्निशिंकुंजं तिमिरपुंजेनसहितं अथवासतिमिरं

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

पुंजंयथास्यात्तथाचल उद्योतहीनाभिसारोयुक्तः ॥४॥

उरसि मुरारेरुपहितहारे घन इव तरलब
लाके॥ तडिदिव पीते रतिविपरीते राज-
सि सुकृतविपाके॥५॥

हेपीते पीतवर्णेगोरित्वंमुरारेः उरसिसुकृतविपाकेदुरापप रिणामे राजसिराजयिष्यसि वर्तमानसामीप्येलट् किंविशिष्टेउ रसि उपहितहारे आरोपितहारे कथंकस्मिन्निव तरलबलाके घनइवमेघइव चंचलपक्षिविशेषे केव तडिदिव कदा रतिवि परीतेपुरुषायितसुरतसमये उपहितहारउरः तरलबलाका घनेनोपमीयते सापीतातडिता तस्यांपुरुषायितत्वेचललं ५

विगलितवसनं परिहृतरशनं घटय जघ
नमपिधानं॥ किसलयशयने पंकजनय
ने निधिमिव हर्षनिदानं॥ ६॥

हेराधेकिसलयशयनी येवर्तमाने पंकजनयने पुंडरीका-क्षेजघनं घटय आरोपय किंभूतं विगलितवसनं स्वयमेवत-तएवपरिहृतरशनं त्यक्तमेखलं अतएव वसनाभावात् अ पिधानंपिधानरहितं अतएवनिधिनोपमीयते किमिव निधि मिव किंभूतंनिधिं हर्षनिदानं हर्षस्यआदिकारणं॥ ६॥

हरिरभिमानी रजनिरिदानीमियमपि या
ति विरामं॥ कुरु मम वचनं सत्वररचनं
पूरय मधुरिपुकामं॥७॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

अपिच हरिरिति हेराधे सत्वररचनंशीघ्रसाधनंयथास्यात्तथा ममवचनंकुरु किंतन्ममवचनं मधुरिपुकामं श्रीकृष्णंवांछां पूरयनचेत्किंस्यात् हरिरभिमानी अतोलाघवं नसंहते पश्चा-त्तांत्यक्ष्यति पश्चादपिकरिष्यसेचेत् इदानीमेवकुरु अन्यथेयं रात्रिरपिविरामं अवसानंयातिगच्छति अभिसारिककालोपि यास्यति ॥७॥

श्रीजयदेवे कृतहरिसेवे भणति परमर मणीयं॥ प्रमुदितहृदयं हरिमतिसदयं न मत स्फुकृतकमनीयं॥८॥ इति श्रीगी तगोविंदे महाकाव्ये एकादशः प्रबंधः॥

हेवैष्णवाः हरिंनमतनमस्कुरुत किंभूतंहरिंजयदेवेसद यं किंविशिष्टेजयदेवे परमरमणीयंइदंपूर्वोक्तंभणति कथंप्र मुदितहृदयं किंभूते कृतहरिसेवे किंभूतंहरिं स्फुकृतमिवकम-नीयं स्फुकृतेनयाकमनीयं अभिलक्षणीयम्॥८॥

श्लोकः॥ विकिरति मुहुः श्वासानाशाः पुरो मुहुरीक्षते प्रविशति मुहुः कुंजं गुं जन् मुहुर्बहु ताम्यति॥ रचयति मुहुः श य्यां पर्याकुलं मुहुरीक्षते मदनकदन-क्लांतः कांते प्रियस्तव वर्तते॥१॥

इदानीं सत्वरगमनायप्रोत्साहयति हेकांतेतवप्रियः सद नेन तेन कदनंग्लानिः श्रांतः क्लांतः तथाविधः सन्किंकरोती

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

त्याह त्वंनागतेवेतिकृत्वामुहुः श्वासान्विकिरतिनिश्वासधा
राःमुंचति पुरः अग्रेमुहुर्वारंवारं आशाः दिशः ईक्षते विलोक
यतिच व्याकुलतयाकस्याः दिशआगमिष्यतीति सर्वादिशः
एककालमवलोकयति तत्राप्यदृष्ट्वा बहिर्निर्यातस्तत्रैवनि-
कुंजइवतिष्ठतीति मुहुर्मुहुः प्रविशति वारंवारंकुतोनागता
किंकेनविनिवारिताउतकुतोभ्ययाद्वाइत्यादितस्याअनागम
नहेतुं विमृश्यमुहुर्वारंवारं अव्यक्तशब्दं ताम्यतिज्ञापयति
अथवावृथेदंविमर्शनं आगमिष्यत्येवेतिमुहुः शय्यांरचय
ति तथाप्यदृष्ट्वापर्याकुलंयथास्यात्तथाममानुरागादधुना
आगमिष्यत्येवेतिमुहुरीक्षते इतिकदनशब्दस्यतात्पर्यं
हरिणीच्छंदः दीपकालंकारः ॥१॥

श्लोकः ॥ त्वद्वाक्येन समं समग्रमधुना
तिग्मांशुरस्तंगतो गोविंदस्य मनोरथेन
च समं प्राप्तं तमः सांद्रतां ॥ कोकानां क
रुणस्वनेन सदृशी दीर्घा मदभ्यर्थना त
न्मुग्धे विफलं विलंबनमसौ रम्योभिसा
रक्षणः ॥२॥

इदानीं सांप्रतमेवगंतुंयोग्यमितिहेतुमाह त्वद्वाक्येने
ति हे मुग्धेमूढेत्वद्वाक्येनासूयामानसहितेनसमंसहसम-
ग्रं सामग्र्येणाधुनाइदानींतिग्मांशुः सूर्यः अस्तंगतः अ
सूयामानसहितः सूर्योस्तंगतः अभिसरणकालोयमित्यर्थः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

गोविंदस्य कृष्णस्य मनोरथेन इदानीं राधा आगमिष्यतीति वांछया समं सहतमः अंधकारः सांद्रतांनिबिडतांप्राप्तंतमसि अभिसरणंयोग्यमित्यर्थः दीर्घामदभ्यर्थनाशीघ्रंगम्यतामि ति मदीयाप्रार्थना कोकानांचक्रवाकानां करुणस्वनेनवि रहदुःखाशब्देनसदृशीयोग्या यथाकोकानांकरुणास्वनो नाना प्रकारःश्रूयते तथामदीयाः काकूक्तयः संप्रतिकार्यभवंतीत्य र्थः तस्माद्धेतोर्विलंबनंविफलं असौ अभिसारक्षणोअभिसा रकालोरम्योगमनयोग्यइत्यर्थः सहोक्तिरलंकारः शार्दूल विक्रीडितंवृत्तं ॥ २ ॥

श्लोक ॥ आश्लेषादनुचुंबनादनुनखो
ल्लेखादनुस्वांतजात् प्रोद्बोधादनुसंभ्र
मादनुरतारंभादनुप्रीतयोः ॥ अन्यार्थं
गतयोर्भ्रमान्मिलितयोः संभाषणैर्जा
नतोर्दंपत्योर्निशि को न को न तमसि
व्रीडाविमिश्रो रसः ॥ ३ ॥

अभिसारेरसाधिक्यंभवतीत्याह आश्लेषादिति दंपत्यो र्जायापत्योस्तमसिअंधकारेव्रीडाविमिश्रोलज्जायुक्तःकः कः रसोनभवेत् इतिनअपितुसव्रीडाः सर्वएव शृंगारादिः रसोभवत्येव कथंभूतयोर्दंपत्योः अन्यार्थेपरस्त्रीपरपुरुषा र्थेगतयोः संकेतस्थानं प्राप्तयोः पुनःकीदृशयोः भ्रमाद्भ्रां तेः गाढांधकारेरसात्मिलितयोः संगतयोः अनंतरंआश्ले

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

षादि विशेषणानियोजनीयानि तत्रएवंसंभोगक्रमः प्रथमं आलिंगनं ततश्चुंबनं ततोनखक्षतं ततःकामोद्बोधः ततःस त्वरः ततोमैथुनं ततःप्रीतिस्ततोभावनमिति क्रममाह आ-श्लेषादिति आश्लेषादालिंगनादनुपश्चान्नखोल्लेखादनुनख क्षतात्पश्चात्स्वांतजा सोद्बोधादनुकामबोधात्पश्चात्संभ्र मादनुवेगात् पश्चाद्रतारंभात् अनुस्कुरद्योगात् पश्चात्तौ तयोस्तृप्तयोः पुनःकीदृशयोः संभाषणैरालापैर्जानतोः नम मेयं भार्यानायं ममपतिरिति॥ ३॥

श्लोक॥ सभयचकितं विन्यस्यंतीं दृशं तिमिरे पथि प्रतितरुमुहुः स्थित्वा मंदं पदानि वितन्वतीं॥ कथमपि रहः प्राप्तामं गैरनंगतरंगिभिः सुमुखि सुभगः पश्य न् स त्वामुपेतु कृतार्थताम्॥ ४॥

इदानीं तल्लाभात्कृष्णः कृतार्थोभवत्वित्याह सभयेति हेसुमुखि सुवदनेराधे सुभगः सौभाग्यवान्सकृष्णस्त्वांप श्यन् कृतार्थतांउपेतुप्राप्नोतु कीदृशींत्वां तिमिरे अंधकार सहिते पथिमार्गेसभयचकितंभयविस्मयाभ्यांसहितंयथास्या त्तथादृशंनेत्रंविन्यस्यंतींनिरीक्षयंतीं निबिडांधकारदर्शनाद्भ यअंधकारेनिःशंकागमनाद्विस्मयः पुनः कीदृशीं प्रतितरुप्रति वृक्षेमुहुः पुनः पुनः स्थित्वामंदंशनैःपदानिचरणव्यापारा न्वितन्वतींमेप्रियतमोअत्रैवागमिष्यतीति मंदंचरणारविंद

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

धारयंतीतिभावः पुनः कीदृशीं कथमपि अंधकारस्यनिबिड त्वात्केनापिप्रकारेणरहः एकांतस्थलंप्राप्तां पुनःकीदृशींका-मस्ययस्तरंगः पुनरुद्बोधः सयेषुतैः कामोल्लासिभिरंगैहस्त पादादिभिरुपलक्षितां उपलक्षणेतृतीया ॥ ४ ॥

श्लोक ॥ राधामुग्धमुखारविंदमधुपस्त्रै-लोक्यमौलिस्थलीनेपथ्योचितनीलरत्न मवनीभारावतारक्षमः ॥ स्वच्छंदं व्रजसुं दरीजनमनस्तोषप्रदोषश्चिरं कंसध्वंसन धूमकेतुरवतु त्वां देवकी नंदनः ॥ ५ ॥

इति श्रीकविराजश्रीजयदेवकृते गीतगोविंदे महाकाव्ये अभिसारिकावर्णने साकांक्षपुंडरीकाक्षोनाम पंचमः सर्गः ५

इदानींकविः सर्गांतेभक्तजनमाशिषयति राधेति देवकी नंदनः श्रीकृष्णः त्वांभक्तंचिरं अवतुदुरितादृक्षतुकीदृशःकृ ष्णः राधायामुग्धंसुंदरंयन्मुखारविंदमुखकमलंतस्य मधुपो-भ्रमरइवनीलत्वान्मुखपानकर्तृत्वाच्च पुनःकीदृशः अवन्या भारावतारेक्षमः समर्थः अवनीभारावतारांतकः इतिवापाठः तदाऽवन्याभुवः भाररूपोऽवतारोयेषामसुराणांतेषामंतकोना शकः पुनः कीदृशः स्वच्छंदानांस्वाधीनानांव्रजसुंदरीजनानां गोपीनांमनस्तोषेचित्तसंतोषेदोषोरात्रिमुखमिव रात्रिमुखेहि नार्यस्तुष्यंति पुनः कीदृशः त्रैलोक्यस्यलोकत्रयस्यमौलि

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

स्थलीवृंदाटवीतस्यानेपथ्योचितमलंकारयोग्यंनीलरत्नमिव- स्थितः पुनः कीदृशः कंसस्य मातुलस्यमारणेधूमकेतुरिवास्थितः राधागमनेसाकांक्षइत्यर्थः ॥५॥ ॥ इतिश्री गीतगोविंदटी कायांपंचमःसर्गः ॥५॥

## अथषष्ठः सर्गः प्रारभ्यते.

श्लोक ॥ अथ तां गंतुमशक्तां चिरमनुर क्तां लतागृहे दृष्ट्वा ॥ तच्चरितं गोविंदे म नसिजमंदे सखी प्राह ॥१॥

अथेति अथशब्दोमंगलार्थः अनंतरंवासखीगोविंदेकृ ष्णांतिकमागत्येत्यर्थः तच्चरितंराधाचरितंप्राहउक्तवतीकिंकृ त्वालतागृहेतांराधांगंतुं अशक्तांदृष्ट्वा कीदृशींराधां चिरंअ नुरक्तांअनुरागिणीं कीदृशेगोविंदेमनसिजेन कामेनमंदे पीडिते ॥१॥

## अथ द्वादशः प्रबंधो गुणकरीरागेण रूपक ताले गीयते.

पश्यति दिशि दिशि रहसि भवंतं ॥ त्वदध रमधुरमधूनि पिबंतं ॥१॥ नाथ हरे जय नाथ हरे सीदति राधा वासगृहे ॥ ध्रु० ॥

गुणकरीरागः रागलक्षणं रतोत्सुकाकांतपथप्रतीक्षामा लापयंतीमृदुपुष्पतल्पे इतस्ततः प्रेरितदृष्टिरार्ताश्यामातनुर्गौ णाकरीप्रदिष्टाइति अस्मिन्वासकसज्जावर्णन वासवेश्मनि

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

कल्पिततल्पेवा समागमविधिं विदधाना पश्यति प्रियसमा
गमशय्यांपश्यतिस्मप्रियवासकशय्यां इतिपश्यतीति हे
नाथ हे हरे द्विरुक्तिः साराधातववासगृहेसांकेतिकनिकुंज
मंदिरेत्वतूत्वत्तः हेतोः सीदति अवसन्नाभवति कथमि-
त्यतआह साराधाएकांतेस्थितासतीदिशिदिशि भवंतंत्वां
पश्यति अवलोकयति कीदृशंत्वां अधरवत् नायकाधरा
मृतवत् मधुराणि मधूनि माध्वीकानिपिबंतं॥१॥

त्वदभिसरणरभसेन वलंती॥पतति
पदानि कियंति चलंती॥२॥

नन्वेवंचेत्तर्हिकिमितिनागतेत्यतआह त्वदभि
सरणे तवाभिसारेरभसउत्साहस्तेन वलंती अभिमुखीभ
वंती कियंतिकतिपयानिपदानिचलंतीसतीपततित्वद्विर
हमूर्च्छयागंतुंअसमर्थेत्यर्थः॥२॥

विहितविशदबिसकिसलयवलया॥
जीवति परमिह तवरतिकलया॥३॥

हाकष्टमेवंचेदशक्तातर्हिकथंजीवतीत्यतआह हेकृ
ष्णसाराधातवरतेःकलया सुरतलेखचिंतनेनइहसमयेप
रंकेवलंजीवतिजीवनहेतुरन्योनास्तीत्यर्थः कीदृशीवि-
हिताःकृताःविशदाः शुभ्राबिसकिसलयाः मृणालांकुरा
एववलयाःकंकणानियस्याःसा॥३॥

मुहुरवलोकितमंडनलीला॥मधुरिपु

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

रहमिति भावनशीला ॥ ४ ॥

मुहुरिति साकीदृशीपूर्वपदेनान्वयः पुनःपुनः अवलोकिता मंडनलीला अलंकारविलासोयया तेनविनानिरर्थकमितिपुनःपुनः वदति पुनः कीदृशी अहंमधुरिपुः कृष्णइतिभावनंध्यानमेवशीलं स्वभावः सद्वृत्तंयस्याः सा ॥ ४ ॥

त्वरितमुपैति न कथमभिसारं ॥ हरिरि-
ति वदति सखीमनुवारं ॥ ५ ॥

तदेवाह त्वरितमिति हरिः मच्चित्तापहारीअभिसारंसंकेतस्थलं त्वरितंशीघ्रंकथंकस्माद्धेतोः नोपैतिनागच्छतीत्यनुवारंसखींवदति ॥ ५ ॥

श्लिष्यति चुंबति जलधरकल्पं ॥ हरिरु
पगत इति तिमिरमनल्पं ॥ ६ ॥

अपिचश्लिष्यतीति साहरिरुपगतः प्राप्तइतिबुद्ध्याऽनल्पं बहुतिमिरमंधकारंश्लिष्यति आलिंगति चुंबतिचकीदृशंतिमिरं जलधरकल्पंमेघसदृशंस्निग्धत्वान्नीलत्वाच्चकृष्णासाम्यंतिमिरस्य ॥ ६ ॥

भवति विलंबिनि विगलितलज्जा ॥ वि
लपति रोदिति वासकसज्जा ॥ ७ ॥

भवतीति भवतित्वयिविलंबिनिविलंबंकुर्वतिसतिविगलितलज्जागतलज्जासाराधाविलपति हेनिःकृपकथमेतावदौदास्यंमयित्वयाचरितमितिविलापंकरोतिरोदिति अश्रूणि

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

मुंचति कीदृशीवासकसज्जाविहितसंविधाने त्यर्थः लक्ष णंतूक्तमेव ॥७॥

**श्रीजयदेवकवेरिदमुदितं॥ रसिकजनं तनुतामतिमुदितं॥८॥ इति श्रीगीत गोविंदे द्वादशः प्रबंधः॥**

श्रीजयदेवेति श्रीजयदेवकवेः उदितंभाषितं इदंगीतं रसि कजनंश्रृंगाररसभावनाभावितांतःकरणं अतिमुदितं अतिश येनहर्षयुक्तं तनुतांकरोत्वित्यर्थः॥८॥

**श्लोः॥ विपुलपुलकपालिः स्फीतसीत्कार मंतर्जनितजडिमकाकुव्याकुलं व्याहरंती ॥तवकितवविधायामंदकंदर्पचिंतां रसज लनिधिमग्ना ध्यानलग्ना मृगाक्षी॥१॥**

इदानींतस्याः त्वदेकपरत्वमाह हेकितवधूर्त सामृगा- क्षीमृगशावलोचना तवरसजलनिधिमग्नात्वच्छृंगाररससा गरेनिमग्नालीनावभूवेत्यध्याहारः किंकृत्वाअमंदकंदर्पस्यम हतः कामस्यचिंतांस्मरणंविधायहृदिकृत्वाध्यानेनतवैवचि त्तेलग्नातत्परा रससागरमग्नायाश्चेष्टितमाह विपुलामह तीपुलकपालिरोमांचपंक्तिर्यस्याः साध्यानकल्पिततवकर स्पर्शेनरोमांचतीत्यर्थः किंकुर्वती त्वद्दत्तंदंतनखक्षतादि कंपरिकल्प्य स्फीतसीत्कारं प्रवृद्धसीत्कारंयथास्यात्तथाव्या हरंती अंतरभ्यंतरेजनितउत्पादितः जडिमाजडत्वंयस्यां कि-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

यायां तद्यथातथा काकुनाध्वनिनाध्वनिविकारविशेषेणाकु लंयथास्यात्तथाव्याहरंती ध्यानेनतवस्तनालंभनाधरपाननी वीबंधनोन्मोचनासक्तं परिकल्प्यमुंचमुंचननमामेतिनिषेध वाक्यंवदंतीत्यर्थः ॥१॥

श्लोकः॥अंगेष्वाभरणं करोति बहुशः प त्रेपि संचारिणि प्राप्तं त्वां परिशंकते वि तनुते शय्यां चिरंध्यायति॥इत्याकल्प विकल्पतल्परचनासंकल्पलीलाशतव्या सक्तापि विना त्वया वरतनुर्नैषा निशां ने ष्यति॥२॥

अंगेष्विति एषावरतनुः सुंदरांगीएषेतिबुद्ध्याप्रत्यक्षीकृ त्यवदति राधाअंगेषुहस्तादिषुआभरणं अलंकारंबहुशः क रोति अनेनाकल्पः कथितः पत्रेपिवृक्षपत्रेपिसंचारिणिप- क्ष्यादिनाचलतिसति त्वामागतंपरिशंकते सर्वतोवितर्कय तीत्यर्थः अनेनविकल्पः अपिचत्वामागतंज्ञात्वातवकामके लिनिमित्तं शय्यांवितनुतेकुरुते अनेनतल्पः कथितः चिरं बहुकालंध्यायति त्वदागमनोपायंचिंतयति रचनेयंदर्शिता कृष्णसंगमेमया इदमिदं कर्तव्यमित्यनेनसंकल्पलीलाशत मुक्तं इतिपूर्वोक्तप्रकारेण आकल्पोभूषणं विकल्पस्तर्कः तल्परचना शय्यारचना संकल्पलीलाशतं एतेषुव्यासक्तापि त्वयाविनात्वामृतेनिशांरात्रिंननेष्यति प्रभातं प्रापयितुंसम

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

र्थानभविष्यतीत्यर्थः ॥२॥

श्लोकः॥ किं विश्राम्यसि कृष्णभोगिभ वने भांडीरभूमीरुहि भ्रातर्यासि न दृष्टि गोचरमितः सानंदनंदास्पदं॥ राधाया व चनं तदध्वगमुखान्नंदांतिके गोपतो गोविं दस्य जयंति सायमतिथिप्राशस्त्यगर्भा गि रः॥ ३॥

इति श्रीकविराजश्रीजयदेवकृतगीतगो विंदे महाकाव्ये वासकसज्जावर्णने सो त्कंठवैकुंठोनाम षष्ठः सर्गः ॥६॥

अधुनाकविः सर्गांतेभक्तानाशिषयति किमिति गोविंद स्यकृष्णस्य गिरः वाचः जयंतिसर्वोत्कर्षेणवर्त्तंते कीदृशाः गि रः सायंकाले इतिथीनां प्राशस्त्यं प्रशंसातद्गर्भेआशयेयासां ताः व्याजोक्तिनामालंकारः कथंभूतस्यगोविंदस्य नंदांति केनंदगोपपार्श्वेतत्ताद्दकूसंकेतसूचनारूपंअध्वगमुखान्निः सृतंराधायाः वचनंगोपतः गोपनंकुर्वतः किंतद्वचनंतत्राह हेभ्रातः पथिकइतिकोमलामंत्रणेभांडीरभूमिरुहि भांडी रनाम्निवटवृक्षेकिंविश्राम्यसिविश्रामंमाकुरुथाः तत्रहेतुः कृ ष्णश्चासौभोगीचतस्यभवनेकालसर्पवासे पक्षे कृष्णस्यभो गिनः शृंगारिणोविलासगृहेपक्षद्वयेनेहस्थेयमितिभ्रातृपदो पादानं श्लेषालंकारश्चात्र तर्हिक्व यामीत्यतआह इतोवदात्

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

दृष्टितोगोचरंप्रत्यक्षीक्रियमाणंतत्सानंदंसकलर्द्धिमतूनंदस्या स्पदंनंदगोपगृहंनयासि अपितुयाहीतिराधावचनंअध्वग सुखान्नंदांतिकेशृण्वतोगोविंदस्यगिरोजयंतीत्यर्थः सोत्कं ठउत्कंठासहितोवैकुंठः श्रीकृष्णोयत्र ॥३॥

## अथसप्तमसर्गः प्रारभ्यते ॥

श्लोकः॥ अत्रांतरे च कुलटाकुलवर्त्मपा
तसंजातपातक इव स्फुटलांछनश्रीः॥ वृं
दावनांतरमदीपयदंशुजालैर्दिक्सुंदरी
वदनचंदनबिंदुरिंदुः॥१॥

अधुनाचंद्रोदयव्याजेनराधायाविरहव्यथाधिक्यंवर्ण यन्नाह अत्रांतरइति अत्रांतरेस्मिन्नवसरेइंदुश्चंद्रः अंशु-जालैः किरणसमूहैः वृंदावनांतरंवृंदावनमध्यप्रदेशंअदी पयत् प्रकाशितवान् विप्रलंभहेतुत्वंदर्शयन्विशिनष्टिकी दृशः इंदुः स्फुटाव्यक्तालांछनश्रीः कलंकशोभायस्यक थंभूतइव कुलटानांकृष्णाभिसारिकाणांकुलस्यसमू-हस्यवर्त्मपातः संकेतमार्गप्रतिरोधस्तेनसंजातमुत्पन्नंपा तकंयस्यतादृशइव कुपातकतः कलंकोव्यक्तोभवतीतिचं द्रस्योद्दीपनत्वमाह पुनःकीदृशः दिशएवसुंदर्यः नायि कास्तासांवदनस्यमुखस्यचंदनबिंदुः श्रीखंडतिलकइव स्त्रीतिलकोवर्तुलोभवति असतीनांचंद्रोदयेगमनाभावा द्धर्मघातः अत्ररूपकोत्प्रेक्षेलंकृती॥ १॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

श्लोकः॥ प्रसरति शशधरबिंबेविहित विलंबेच्च माधवे मधुरा॥ विरचित्तविविधविलापं सा परितापं चकारोच्चैः॥२॥

अत्रविप्रलब्धानायिकावर्ण्यते तल्लक्षणंभरते प्रथिलसदनुरागादूतिकांप्रेक्ष्यपूर्वंसरभसमपिधायकापिसंकेतभूमौ नमिलतिखलुयस्याः वल्लभोदैवयोगात्प्रवदतिभरतस्तां नायिकांविप्रलब्धांप्रसरतीति साराधाविरचितः कृतःविविधोनानाप्रकारोविलापोयत्र उच्चैर्महांतंपरितापंदुःखंचकार कृतवती कसति शशधरबिंबेचंद्रमंडलेप्रसरतिउद्गच्छति सतिमाधवे कृष्णो विहितविलंबेसंकेतागमनंप्रतिकालातिक्रमंकृतवतिसति॥२॥

अथ त्रयोदशः प्रबंधो गौडमालवरागेण प्रतिमंठताले गीयते.

कथितसमयेपि हरिरहह न ययौ वनं॥ मम विफलमेतदनुरूपमपि यौवनं॥१॥ यामि हे कमिह शरणं सखीजनवचनवंचिता॥ ध्रु०॥

विलापमेवगीतेनाह कथितेति गीतस्यास्यमालवगौडी रागः प्रतिमंठकृतालः हेइतिस्वचित्तसंबोधनं इहनिर्जनेवने सखीजनस्य वचनैः कृष्णागमनावेदकैर्वंचिताप्रतारिता अहंकंपुरुषंशरणंरक्षितारंयामिगमिष्यामिकिंतुकमेवजलमेव

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

शरणंयामि जलप्रवेशो वरमित्यर्थः किमित्यत आह अह हेत्याश्चर्येहरिः कृष्णः कथितसमयेपि उक्तकालेपिवनवृंदा वनंसंकेतस्थानंनययोनजगाम कृष्णोपभोगाभावात् ममै तदनुरूपंयोग्यमपियौवनंविफलंनिरर्थकम्।।१।।

**यदनुगमनाय निशि गहनमपि शीलितं ।।तेन मम हृदयमिदमसमशरकीलितं।।२।।**

यदिति मयायस्यकृष्णस्यानुगमनायस्फुरतेनसंतोषा यथितुंनिशिरात्रौगहनमपिनिर्जनवनमपिशीलितंसेवितं तेनकृष्णेनहेतुनाममइदंहृदयंमदीयंचित्तं असमशरेणका मेनकीलितंविद्धं कृष्णागमनाभावात्।।२।।

**मम मरणमेव वरमतिवितथकेतना।।कि मिति विषहामि विरहानलमचेतना।।३।।**

ममेति इहवनेअचेतनाज्ञानशून्याविरहानलंवियो गाग्निंकिमितिविषहामिसहामितस्मान्ममममरणंएववरंश्रे ष्ठं मरणेविरहानलाभावात् कीदृशीअहं अतिवितथंअ- तिव्यर्थमेवशरीरंयस्याः कृष्णेनशरीरसौंदर्योपभोगाभावात्३

**मामहह विधुरयति मधुरमधुयामिनी।।का पि हरिमनुभवति कृतसुकृतकामिनी।।४।।**

मामिति अहहेति दुःखानुकारे मधुरमधुयामिनीमनो ज्ञावसंतरात्रिर्मांविधुरयतिविक्लवयतिकापिकृतंसुकृतंपु ण्यंययाताहशीकामिनीकांताहरिंकृष्णमनुभवतिउपभुंक्ते।।४।।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

अहहकलयामिवलयादिमणिभूषणं॥
हरिविरहदहनवहनेनबहुदूषणम्॥५॥

अहहेति अहंवलयादिमणिभूषणंकंकणप्रभृतिमुक्तालंकारं हरिविरहदहनवहनेनकृष्णावियोगधारणेनहेतुनाबहुदूषणंअतिशयापरंकलयामिमन्ये प्रियदर्शनेनस्त्रीणांअलंकारसाफल्यमितिभावः॥५॥

कुसुमसुकुमारतनुमतनुशरलीलया॥
स्रगपिहृदिहंतिमामतिविषमशीलया॥६

कुसुमेति स्रगपिपुष्पमालापि अतनुशरलीलयाकंदर्पबाणविलासेनमांहृदिहंति किंदृशींमांकुसुमवत्सुकुमाराकोमलातनुःशरीरंयस्याः सा कीदृश्या अतनुशरलीलया अतिविषमंअतिदारुणंशीलंस्वभावोयस्याःतया बाणैर्नहिक्षतंक्रियतेनपुष्पादिना॥६॥

अहमिहनिवसामिनगणितवनवेतसा॥
स्मरतिमधुसूदनोमामपिनचेतसा॥७॥

अहमिति गणितवनवेतसा गणिताप्रतिवनंकृष्णमन्वेषयंत्यापरिसंख्यातावनवेतसवृक्षाययासा अहंइहकुंजेकिंननिवसामि अपितुवसाम्येव अहंतुनअसमर्थाशिरश्चालनेपिएवंविधामपिमांमधुसूदनः कृष्णश्चेतसापिनस्मरति आश्चर्यमित्यर्थः॥७॥

हरिचरणशरणजयदेवकविभारती॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

वसतु हृदि युवतिरिव कोमलकलावती॥८॥
इतिश्रीगीतगोविंदे त्रयोदशः प्रबंधः॥

हरीति हरिचरणौ रक्षितारौ यस्य स चासौ जयदेवकविस्तस्य भारती गीतरूपा सरस्वती भक्तानां हृदि मनसि वसतु कीदृशी भारती कोमला अनिष्ठुरवर्णा कलावती कविलकलायुक्ता च केव युवतिरिव यथा नायकहृदये कोमलकलावती स्तकुमारांगी चतुःषष्टिकामकलायुक्ता च नायिका वसति॥८॥

श्लोकः॥ तत्किं कामपि कामिनीमभिसृतः किं वा कलाकेलिभिर्बद्धो बंधुभिरंधकारिणि वनोपांते किमुद्भ्राम्यति॥ कांतः क्लांतमना मनागपि पथि प्रस्थातुमेवाक्षमः संकेतीकृतमंजुवंजुललताकुंजेपि यन्नागतः॥१॥

कृष्णस्य विलंबे तर्कमाह तत्किमिति कांतः कृष्णः संकेतीकृतः अभिसरणस्थानं संपादितः यो मंजुर्मनोहरः वंजुललताकुंजः वेतसलतागृहं तस्मिन्नपि यस्मान्नागतः नायातः तस्मात्कारणात्कामपि कामिनीं नायिकामभिसृतः तदभिमुखं गतः किं वाथवा बंधुभिर्मित्रैः कलाकेलिभिः हास्यादिक्रीडाभिर्बद्धः यंत्रितः अथवा अंधकारिणि तमोयुक्ते वनोपांते किं भ्राम्यति तमसि मार्गभ्रमात् भ्रमणं

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

युज्यतएव अभ्यस्तस्यप्रमाभावइतिचेत्तत्राह क्लांतम-
नाः मन्निमित्तं समाकुलमंतः करणंयस्यसन् पथिमनाग
पि अल्पमपिप्रस्थातुं आगंतुं अक्षमः किंअसमर्थः किं अ
त्रअपिशब्दः किमर्थः उक्ताचेयंनायिका उक्ताभवति सायस्याः
संकेतंनागतः प्रियः तस्यनागमने हेतुं चिंतयंत्याकुलाय
थेति संशयाक्षेपालंकारोयम् ॥ १॥

श्लोकः॥ अथागतंमाधवमंतरेणसखी
मियंवीक्ष्यविषादमूकाम्॥ विशंकमाना
रमितंकयापि जनार्दनंदृष्टवदेतदाह॥ २॥

अथेति अथानंतरंइयं राधामाधवंकृष्णमंतरेणविना
आगतांसखींवीक्ष्यदृष्ट्वा एतद्गीतेनवक्ष्यमाणमाह कीदृ-
शींसखीं विषादेनकार्यासिद्ध्यामूकांवक्तुमक्षमां कीदृशी
राधाजनार्दनंकृष्णंकयापिकामिन्यारमितंक्रीडितंवि-
शंकमानातर्कयंती कथंदृष्टवत् कामिन्यासहितंकृष्णंदृ
ष्ट्वेत्यर्थः यद्वा दृष्ट्वाभिधीयतेतथाप्राहेत्यर्थः उक्तिः एषा
उन्मादतः अत्रोपेंद्रवज्रावृत्तम् ॥ २॥

अथचतुर्दशप्रबंधोवसंतरागेणएक
तालीताले गीयते.

स्मरसमरोचितविरचितवेषा॥ गलितकुसु
मदलविलुलितकेशा॥ १॥ कापिचपलामधुरि
पुणाविलसतियुवतिरधिकगुणा॥ ध्रुवपदं॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

दृष्टवदित्युक्तंतद्गीतेनाह गीतस्यास्यवसंतरागः स्मरेति हेसखि कापियुवतिः कामिनीमधुरिपुणा कृष्णेनसहविलसति क्रीडति कीदृशीसाअधिक गुणा अतिशयितसौंदर्यादिगुणैर्युक्ता स्मरसमरोचितः कामयुद्धयोग्यः विरचितः कृतः वेषो लंकारादिर्यया सा पुनः कीदृशीगलितान्निकुरुमानियेभ्यःतादृशाः दरविलुलिताईषदितस्ततोव्यस्ताः केशाः यस्याः साविपरीतरतियुक्ता ॥१॥

हरिपरिरंभणवलितविकारा॥कुचकलशोपरितरलितहारा॥२॥

हरेः परिरंभणेनालिंगनेनवलितः संभक्तोललितोमनोहरोवाविकारोकामभावोयस्याः साकुचकलशयोरुपरिस्तनघटयोर्मस्तकेतरलितश्चंचलोहारोयस्याः सा॥२॥

विचलदलकललिताननचंद्रा॥तदधरपानरभसकृततंद्रा॥३॥

विचलदिति विचलद्भिः कंपमानैरलकैः चूर्णकुंतलैः ललितः सुंदरः आननचंद्रोमुखचंद्रोयस्याःसापुनः कीदृशीतस्यकृष्णस्य ओष्ठपानहर्षेणकृतातंद्रारतिसुखानुभवनिद्रायया सा३

चंचलकुंडलदलितकपोला॥ मुखरितरशानजघनगतिलोला॥४॥

चंचलेति चंचलाभ्यांकुंडलाभ्यांदलितौसंघृष्टौकपोलौयस्याः सा पुनः कीदृशी मुखरिताशब्दसहितारशना

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

कांचीयस्मिन्जघनेतस्यगत्याचांचल्येनलोलाचंचला॥४॥

दयितविलोकितलज्जितहसिता॥बहुवि
धकूजितरतिरसरसिता॥५॥

दयितेति दयितस्यकृष्णस्यविलोकनेनमुखवीक्षणे
नलज्जितंसंजातलज्जंहसितंहास्यंयस्याःसा,पुनःकीदृ
शीबहुविधंपिकशिखिकलहंसादीनामिवनानाप्रकारकूजि
तंयत्रएतादृशोरतिरसःक्रीडारसस्तेनरसिताहृष्टा॥५॥

विपुलपुलकपृथुवेपथुभंगा॥श्वसित
निमीलितविकसदनंगा॥६॥

विपुलेति विपुलाबहुलाःपुलकारोमांचायस्याःपृथु
र्महान्वेपथुः कंपोभंगइवयस्याः सा च पुनः कीदृशीश्वसि
तंस्मरतायासेनजनितोनिःश्वासः निमीलितंपरमानंदावा-
प्त्याजनितं नेत्रनिमीलितंच ताभ्यांविकसन्प्रकटीभवन्
अनंगः कामोरेतोलक्षणोयस्याःसानिमीलितेत्यनेनच्यु
तकालः सूचितः॥६॥

श्रमजलकणभरसुभगशरीरा॥परि-
पतितोरसिरतिरणधीरा॥७॥

श्रमेति श्रमजलकणभरेणस्मरतायासघर्मजला-
धिक्येन सुभगंमनोज्ञं शरीरंयस्याःसा एतेनसात्विकभा
वोसत्तिः सूचिता सात्विकाभावाः पूर्वमुक्ताःपुनःकीदृशी
उरसिपरिपतिता कृष्णवक्षस्थलंप्राप्यस्थितारतिः स्मरतं

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

रणाइवतत्रधीरा॥७॥

श्रीजयदेवभणितं हरिरमितं॥ कलिकलुषंजनयतुपरिशमितं॥ ८॥ इतिश्रीगीतगोविंदेचतुर्दशःप्रबंधः॥

श्रीजयदेवेति श्रीजयदेवभणितमुक्तंवर्णितमित्यर्थःयद्धरेःरमितंकृष्णास्यसंभोगःतत्कलेःकलियुगस्यकलुषंपापंगायकानांश्रोतृणांचपरिशमितंशांतंजनयतुशमनंकरोतु॥८॥

श्लो०॥विरहपांडुमुरारिमुखांबुजद्युतिरयंतिरयन्नपिवेदनाँ॥विधुरतीवतनोतिमनोभुवःसुहृदयेहृदयेमदनव्यथां॥१॥

विरहेति अयेहेसखिचंद्रदर्शनविषादेनसखींप्रतिब्रूतेअयंविधुश्चंद्रःममहृदयेमदनव्यथांकामपीडांअतीवात्यर्थेनतनोतिविस्तारयति उद्दीपकविभावनत्वात् कीदृशोविधुःविरहेणमद्वियोगेनपांडुधूसरंयन्मुरारेःमुखांबुजंकृष्णस्यवदनकमलंतस्यद्युतिरिवद्युतिर्यस्यसःपुनःकीदृशः वेदनामपितिरयन्आच्छादयन् व्यथाजनकत्वेहेतुमाह मनोभुवःकामस्यसुहृन्मित्रं॥१॥

अथपंचदशप्रबंधो गुर्जरीरागेणएकतालीताले गीयते.

समुदितमदनेरमणीवदनेचुंबनवलिताधरे॥मृगमदतिलकंलिखतिसपुलकंमृगमिवरजनीकरे॥१॥ रमतेयमुनापुलिनवने॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

विजयीमुरारिरधुना ॥ ध्रु० ॥

पूर्वगीतेनकस्याश्चिद्विपरीतरतमुक्तं अधुनाकस्याश्चित्स्वाधीनभर्तृकायानायककर्तृकांक्रीडामाह समुदितेतिस्वाधीनभर्तृकालक्षणं यस्यारतिगुणाकृष्टःपतिःपार्श्वंनमुंचति विचित्रविभ्रमैर्युक्तास्वाधीनपतिकायथा इतिगुर्जरीरागः हेसखि अधुना अस्मिन्कालेयमुनापुलिनेयद्वनंतस्मिन्विजयीजयशीलोमुरारिःकृष्णोरमतेक्रीडति कथंरमतइत्यतआह रम्यतेस्यामितिरमणीतस्याःमुखेसपुलकंरोमांचसहितंयथास्यात्तथा मृगमदतिलकंकस्तूर्याःतिलकंलिखति कीदृशोवदने समुदितःसमुपचितःमदनःकामोयत्रसकामइत्यर्थः चुंबनेनवलितःसुमुखीकृत्यसंकोचितःअधरोयस्यतस्मिन्चुंबनंदत्वातिलकंलिखतीत्यर्थः कस्मिन्कइव रजनीकरेचंद्रेमृगमिवलिखतीत्यर्थः ॥ १ ॥

घनचयरुचिरेरचयतिचिकुरेतरलिततरुणानने ॥ कुरबककुसुमंचपलासुषमंरतिपतिमृगकानने ॥ २ ॥

घनेतितस्याःघनचयरुचिरेमेघसमूहमनोहरेचिकुरेकेशेजातावेकवचनं कुरबककुसुमं अम्लानंपुष्पंवाकोटिपुष्पंवारचयतियथास्थानमर्पयति पुनःकीदृशे तरलितानिचंचलीकृतानितरुणानामाननानिमुखानियेन अतिसुंदरतयावीक्षणार्थं कीदृशंकुसुमंचपलावत्विद्युद्विवसुषमाशोभायस्यलक्ष्यलक्षिततयालोहितत्वाच्चविद्युत्साम्यं पुनः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

कीदृशे रतिपतिः कामः सएवमृगस्तस्यकानने यथामृगवासो वनेतथाचिकुरे कामइति कामजनके इत्यर्थः अस्मिन्नेवमेघे विद्युद्भवति तरुणानांमेघसमयः कामजनकइतिमेघोदयेह रिणानामतिसुखमुत्पद्यते॥ २॥

घटयतिसुघनेकुचयुगगगनेमृगमदरुचिरूषिते॥ मणिसरममलंतारकपटलंनखपदशशिभूषिते॥ ३॥

घटयतीति सुघनेनिबिडेकुचयुगगगनेस्तनद्वयाकाशे अमलंनिर्मलंमणिसरंमुक्ताहारमेव तारकपटलंनक्षत्रसमूहंघटयतियोजयति मृगमदरुचिः कस्तूरिकादीप्तिस्तयारूषिते पुनः कीदृशे नखपदंनखक्षतंतदेवशशीद्वितीयाचंद्रस्तेनभूषिते अलंकृते गगनपक्षेशोभिताघनामेघायस्मिन्नित्यद्भूतोपमार्थः३

जितबिसशकलेमृदुभुजयुगलेकरतलनलिनीदले॥ मरकतवलयंमधुकरनिचयंवितरतिहिमशीतले॥ ४॥

जितेति मृदुभुजयुगलेकोमलबाहुद्वयेमरकतवलयंमरकतखचितकंकणमेव मधुकरनिचयंभ्रमरसमूहं वितरतिददातिविरचतीत्यर्थः कीदृशेभुजयुगले जितबिसशकले-जितंसदृशीकृतंमृणालखंडंयेन पुनः कीदृशे करतलमेवनलिनीदलं पद्मपत्रंयत्र हिमवत्शीतलेसंतापहरत्वात् पद्मिनीपत्रयुक्तेबिसशकलेभ्रमरसमूहस्तिष्ठतीतिरूपकालंकारः॥४॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

रतिगृहजघने विपुलापघने मनसिज
कनकासने ॥ मणिमयरशनं तोरणहस
नं विकिरति कृतवासने ॥ ५ ॥

रतीति रतेः शृंगारस्य गृहे आश्रये जघने नितंबे मणिमयर शनं मुक्तामयीं मेखलां विकिरति ददाति कीदृशे जघने विपुलं महत्तरं अपघनं शरीरं यस्य अतिमांसल इत्यर्थः पुनः कीदृशे मनसिजस्य कामस्य कनकनिर्मिते सिंहासने इव कीदृशं मणिमयरशनं तोरणस्य वंदनमालिकाया हसनं उपहासो यस्मात् यदा राजा सिंहासने उपविशति तदा वंदनमालिका बध्यते पुनः कीदृशे कृतं दत्तं वासनं वस्त्रं यस्मिन् वस्त्रोपरि मेखलां बध्नातीत्यर्थः यद्वा कृतं कामेन वासनं स्थानं यत्र तादृशे ॥ ५ ॥

चरणकिसलये कमलानिलये नखमणि
गणपूजिते ॥ बहिरपवरणं यावकभरणं
जनयति हृदि योजिते ॥ ६ ॥

चरणेति चरणकिसलयं पदमेव पल्लवं तस्मिन् यावकभरणं अलक्तकपूरणं जनयति करोतीत्यर्थः कीदृशे चरणकिसलये हृदि योजिते कृष्णानुरागातिशयात् स्वहृदयप्रापिते स्वहृदये तस्याश्चरणं कृत्वा यावकं रचयतीत्यर्थः कीदृशे हृदि कमलायाः निलये आश्रये कीदृशे किसलये नखा एव मणिगणाः पुष्परागादिरत्नसमूहास्तैः पूजिते अर्चिते कीदृशं यावकाभरणं बहिरपवरणं बाह्यमाच्छादकं यत्तद्वितरतीति ॥ ६ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

स्मयतिस्फुटशंकामपिसहृशं खलहलध
रसोदरे॥ किमफलमवसं चिरमिह विरसं
वदसखिविटपोदरे॥७॥

स्मयतीति हेसखिखले दुर्जनेबलभद्रस्य सोदरेभ्रात रिकृष्णेकामपिसुदृशंशोभने दृशौनेत्रेयस्यास्तांनायिकांसदृशं यौवनरूपगुणादिभिस्तुल्यंयथास्यात्तथारमयतिसतिक्रीडति सति इहविटपोदरलतागृहेअफलंनिष्प्रयोजकंविरसंरसरहितंयथास्यात्तथा चिरंबहुकालंकिमवसंस्थितास्मि हेसखित्वं वदकथय हलवाहकस्य सोदरइतिसाभिप्रायंखलइति क्रोधविभावना॥७॥

इहरसभणनेकृतहरिगुणनेमधुरिपुपदसे
वके।कलियुगचरितंनवसतुदुरितंकविनृ
पजयदेवके॥८॥ इतिश्रीगीतगोविंदे पंच
दशः प्रबंधः॥

इहमयिकवीनांनृपेजयदेवकेकलियुगेचरितभाचरितं कलियुगेनचरितंवादुरितंपापंनवसतुनतिष्ठतु प्रार्थनायां लोट् कीहृशे रसस्यशृंगाररसस्यभणनंकथनंयस्यम- धुरिपोः कृष्णस्यचरणसेवके कर्तरियक् अतएवकृतं हरे गुणानांगुणनंचिंतनंयेन॥८॥

श्लोकः॥ नायातःसखिनिर्दयोयदिशठ
स्त्वंदूतिकिंदूयसेस्वच्छंदंबहुवल्लभःसरमते

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

किंतत्र ते दूषणम् ॥ पश्याद्यप्रियसंगमाय दयितस्याकृष्यमाणं गुणैरुत्कंठार्तिभरादिवस्फुटदिदं चेतः स्वयं यास्यति ॥ १ ॥

कृष्णस्यागमनात् दुःखितां सखीमाश्वासयंत्याह ना यातइति हे सखि हे दूति दूत्यकर्मकुशले यदि निर्दयः दयारहितः शठः धूर्तो वंचकः कृष्णो नायातः तर्हि किं त्वं दूयसे संतप्ता भवसि अनागमने कारणमाह बव्होवल्लभास्त्रियो यस्य सः कृष्णः स्वच्छंदं स्वेच्छया नत्रस्थाने रमते क्रीडति तेतव किंदूषणं कः अपराधः नकोपीत्यर्थः तर्हि कथमत्रागमिष्यतीत्यतआह पश्येति हे सखि अद्येदानीं ममइदं चेतोमनः प्रियसंगमाय कृष्णसंभोगार्थं स्वयमेव यास्यति इति त्वं पश्य जानीहि कीदृशं चेतः दयितस्य कृष्णस्य गुणैः सौंदर्यादिभिः आकृष्यमाणं वशीकृतं पुनः कीदृशं उत्कंठा औत्सुक्यं आर्तिः कामपीडा तयोः भरो तिशयस्तस्मादिवस्फुटत् बहिर्भवत् अपरमपि वस्त्वंतरसंकुलेस्थाने-स्थितं वस्तु सांकर्याद्बहिर्भवतीति स्फुटत् विदलदिति वा अन्योपिगुणैरज्जुभिराकृष्टः सन् प्रयातीति अत्रोत्प्रेक्षालंकारः ॥ १ ॥

अथ षोडशप्रबंधो देशाकरागेणरूपक ताले गीयते.

अनिलतरलकुवलयनयनेन ॥ तपति न साकिसलयशयनेन ॥ सखियारमिता वनमालिना ॥ ध्रु० ॥ १ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

देशांकरागः अनिलेति हेसखियानायिकावनमालिना कृष्णेनरमिताक्रीडितासाकिसलयशयनेननवपल्लवशय्यायां नतपतिनोपतप्ताभवति अथवायावनमालिनाऽरमितामा दृशीसा किसलयशयने नतपति अपितुतपत्येवेतिकाका की दृशेनवनमालिना अनिलेनवायुनातरलंचंचलंयत्कुवलयं नीलोत्पलंतद्वत् नयनेयस्यसतेनसार्द्रंरसावलोकनादिति भावः अस्मिन्गीते संभोगवियोगौज्ञातव्यौ ॥ १ ॥

विकसितसरसिजललितमुखेन ॥ स्फुट तिनसामनसिजविशिखेन ॥ २ ॥

विकसितेति विकसितंप्रफुल्लितंयत्सरसिजंकमलंतद्वन्म नोहरंललितंआननंयस्यसएवंभूतेनवनमालिनायारमितासा मनसिजविशिखेनकामबाणेननस्फुटतिनविद्धाभवतीतिसं भोगे वियोगेतुनस्फुटत्येवेतिकाका ॥ २ ॥

अमृतमधुरमृदुतरवचनेन ॥ ज्वलतिनसा मलयजपवनेन ॥ ३ ॥

अमृतेति अमृतवत् मधुराणिमनोज्ञानिमृदुतराणिअति कोमलानि वाक्यानियस्यतेनवनमालिनायारमितासामलय जपवनेनमलयानिलेनज्वलतिनसंदीप्यते संभोगे वियोगे तुसानज्वलति अपितुज्वलत्येव ॥ ३ ॥

स्थलजलरुहरुचिकरचरणेन ॥ लुठति नसाहिमकरकिरणेन ॥ ४ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

स्थलेति स्थलोद्भवजलरुहाणां पद्मानां रुचिरिव रुचिर्येषां तादृशौ करौ चरणौ च यस्य तेन वनमालिना या रमिता सा हिमकरस्य किरणेन चंद्रस्य दीप्त्या न लुठति नो तप्ता भवति इति संभोगे वियोगे तु न तपति अपितु तपत्येव स्थलपद्मस्यातिलोहितत्वेनोपादानं ॥ ४ ॥

सजलजलदसमुदयरुचिरेण ॥ दलति न हृदि चिरविरहेण ॥ ५ ॥

सजलेति सजलजलदसमुदयवत् सोदकमेघोदकवत् रुचिरः सुंदरस्तेन वनमालिना या रमिता सा हृदि मनसि विरहभरेण विरहाधिक्येन न दलति न विदीर्यते इति पूर्ववत् ज्ञेयं ५

कनकनिकषरुचिशुचिवसनेन ॥ श्वसति न सा परिजनहसनेन ॥ ६ ॥

कनकेति कनकनिकषस्य सुवर्णरेखाया रुचिरिव शुचि विमलं वस्त्रं यस्य पीतांबरेणेत्यर्थः तेन वनमालिना या रमिता सा परिजनहसनेन लोकहास्येन सखीहास्येन न श्वसति संभोगे वियोगे तु परिजनहसनेन सपत्नीहसनेन न श्वसति अपितु श्वसत्येव ॥ ६ ॥

सकलभुवनजनवरतरुणेन ॥ वहति न सा रुजमतिकरुणेन ॥ ७ ॥

सकलेति सकलभुवने त्रैलोक्ये ये जनाः युवानस्तेभ्यो वरेण श्रेष्ठेन तरुणेन यूना अतिकरुणेनातिदयावता वनमालिना या रमिता सा रुजं पीडां न वहति इति संभोगे वियोगे तु सा रुजं

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

वहत्येव कीदृशेन कृष्णेन करुणां दयां अतिक्रांतेन निर्दयंनेत्यर्थः ७

श्रीजयदेवभणितवचनेन ॥ प्रविशतु हरिरपि हृदयमनेन ॥ ८ ॥ इतिश्रीगीतगोविंदे षोडशः प्रबंधः ॥

अनेन श्रीजयदेवभणितं यद्वचनं गीतरूपं तेन हरिः कृष्णोपि हृदयं भक्तानां चित्तं प्रविशतु पुण्यदातृत्वात् कीदृशं हृदयं हरिचरणचिंतनात् विनष्टपापमिति भावः ॥ ८ ॥

श्लोकः ॥ मनोभवानंदनचंदनानिलप्रसीद रे दक्षिण मुंच वामतां ॥ क्षणं जगत्प्राणविधाय माधवं पुरो मम प्राणहरो भविष्यसि १

पीडयंतं मलयानिलं प्रार्थयते मनोभवेति हे चंदनानिल मलयसंबंधिवात प्रसीद मय्योपरि प्रसन्नो भव रे इत्याक्षेप संबोधनं दुःखकारित्वात् दक्षिण त्वं वामतां प्रातिकूलतां मुंच त्यज चंदनसंसर्गित्वात्तव वक्रत्वं नोचितमिति भावः ननु मयि वामत्वं नास्तीत्यत आह हे मनोभवानंदन कामम आनंदयसीति तद्बुद्धोधेनैवम प्रातिकूल्यमाचरसीत्यर्थः यदि च वामतामपि न मुंचसि तदा हे जगत्प्राण जगतां प्राणभूत क्षणं अल्पकालं माधवं पुरो विधाय कृष्णमग्रे कृत्वा मम प्राणहरो भविष्यसि प्राणगमनसमये हि कृष्णदर्शनं अतिदुर्लभं इति जगतां प्राणस्य प्राणसंरक्षणं समुचितमिति भावः दक्षिणस्य वामत्वं जगत्प्राणस्य प्राणहरत्वमिति विरोधनामालंकारश्च ॥ १ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

श्लो०॥ रिपुरिवसखीसंवासोयं शिखीवहिमा
निलो विषमिवसुधारश्मिर्दूरंदुनोति मनोगम
म्॥ हृदयमदयेतस्मिन्नेवंपुनर्वलतेबलात्
कुवलयदृशांवामः कामोनिकामनिरंकुशः॥२॥

पुनरपिसखींप्रत्याह रिपुरिति सअयंसखीसंवासः स
खीभिः सहसम्यक् वासोवासस्थानं रिपुरिव शत्रुरिवममम
नोतिसंतापयति हिमानिलः शीतलवायुः शिखीववन्हि रि
वममम नोदुनोति सुधारश्मिश्चंद्रोविषंकालकूटमिवदूरंदु
नोत्यतिसंतापयति तस्मिन् अदयेकरुणारहिते प्रियएवंवि-
चारितमेव ममहृदयंपुनः पुनरपिबलात् हठाद्वलतेनिवार्यमा
णमपितत्रैवनिर्गच्छतीत्यर्थः यतः कुवलयदृशांनीलोत्पला
क्षीणांकामः कंदर्पोनिकामनिरंकुशः अतिशयेनस्वेच्छाचारी
अपरतंत्रइत्यर्थः अतएववामः क्रूरः तदुक्तं रसिकः रहस्येनिषि
द्धेवर्ततेप्रायः कामोवामः स्वभावतइति सखीनांरिपुवद्धिमानि
लस्यवन्हिवत् सुधांशोर्विषवदिति विरोधालंकारश्चात्र॥२॥

श्लोकः॥ बाधांविधेहिमलयानिलपंचबा
णप्राणान्गृहाण नगृहंपुनराश्रयिष्ये॥
किंतेकृतांतभगिनिक्षमयातरंगैरंगानि-
सिंचममशाम्यतुदेहदाहः॥३॥

पुनरपि जीवितनिरपेक्षतेनमलयानिलादीन्प्रत्याह
बाधामिति हे मलयानिल चंदनवायो बाधांममपीडांविधे

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

हिकुरु हे पंचबाण हे काम त्वं मम प्राणान् गृहाण यथा पुनर पि अहं गृहं नाश्रयेन यास्यामि तथा प्राणान् गृहाणेत्यर्थः हे कृतांतभगिनि यमस्वसः यमुने तव क्षमया शांत्या किं यमभ गिन्यास्तव शांतिर्नोचितेतिभावः त्वत्तरंगैः स्वकीयैः कल्लो लैः मे अंगं निषिंच प्लावय तेन मम देहदाहः शरीरतापः शा- म्यतु मरणमेव भवत्वित्यर्थः ॥ ३ ॥

श्लो० ॥ सांद्रानंदपुरंदरादिदिविषद्वृंदैरमं दादरादानम्रैर्मुकुटेंद्रनीलमणिभिः संद र्शितेंदीवरम् ॥ स्वच्छंदं मकरंदसुंदरगल न्मंदाकिनीमेदुरं श्रीगोविंदपदारविंदम शुभस्कंदाय वंदामहे ॥ ४ ॥

इतिश्रीकविराजश्रीजयदेवकृतगीतगो विंदे महाकाव्ये श्रीनागरनारायणो नाम सप्तमः सर्गः

सर्गांते कविर्नमस्करोति सांद्रेति श्रीगोविंदस्य पदार विंदं श्रीकृष्णस्य चरणपद्मं वंदामहे नमामः किमर्थं अशु भस्कंदाय अशुभनाशार्थं कथंभूतं पदारविंदं सांद्रानंदाः नि बिडहर्षाः पुरंदरादिदिविषदः इंद्रादिदेवास्तेषां वृंदैः समूहैर मंदादरात् अतिशयितबहुमानात् आनम्रैः समंतान्नतियुक्तैः कर्तृभूतैः मुकुटानामिंद्रनीलमणिभिः नीलवर्णैः मणिभिः करणभूतैः संदर्शितं इंदीवरं पद्मं यत्र पुनः कीदृशं स्वच्छंदं

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

यथास्यात्तथा मकरंदवत्कंदर्पपुष्परसवन्मधुरंयथास्यात्त थागलंस्त्रामंदाकिन्याविययद्गंगयामेदुरंसांद्रंस्निग्धमित्यर्थः श्रीशब्दउत्कर्षार्थः नागरश्चतुरोनारायणोयत्रसः तथाशा र्दूलविक्रीडितंवृत्तं ॥७॥

अथ अष्टमसर्गः प्रारभ्यते.

श्लो० ॥ अथकथमपियामिनींविनीयस्म रशरजर्जरितापिसाप्रभाते ॥ अनुनयव- चनंवदंतमग्रेप्रणतमपिप्रियमाहसाभ्यसू यम् ॥१॥

अधुनाराधाप्रियंप्रातरागतंदृष्ट्वासाभ्यसूयवचनमे वमाह अथेति अथानंतरंमंगलार्थेवा कथमपिसकष्टं यामिनींरात्रिंविनीयनीत्वास्थितासाराधाप्रियंकृष्णंसा भ्यसूयंसेर्ष्यंयथास्यात्तथाहउक्तवती कीदृशीसा स्मरश रैः कामबाणैः जर्जरितापिविद्धापि कीदृशंप्रियं प्रातःस मयेअनुनयायप्रबोधायवचनंवाक्यंवदंतंपुनः कीदृशंअ ग्रेप्रणमंतमपिनम्रमपि ॥१॥

अथसप्तदशप्रबंधोभैरवरागेणयति ताले गीयते.

रजनिजनितगुरुजागररागकषायित मलसनिमेषं ॥ वहतिनयनमनुरागमिव स्फुटमुदितरसाभिनिवेशं ॥१॥ हरिहरि

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

याहिमाधवयाहिकेशवमावदकैतववा
दं॥तामनुसरसरसीरुहलोचनयातवह
रतिविषादम्॥ध्रु०॥

अस्मिन्खंडितानाम्नायिकावर्ण्यते तल्लक्षणं उल्लं
घ्यसमयंयस्याप्रेयानन्योपभोगवान् भोगलक्ष्म्यांकितः
प्रातरागच्छेत्साहिखंडिता१ निद्राकषायकलुषीकृतताम्र
नेत्रोनारीनखव्रणविशेषविचित्रितांगः यस्याःकुतोपिगृ
हमेतिपतिः प्रभातेसाखंडितेतिकथिताकविभिःपुराणैः२
साभ्यसूयवचनमेवगीतेनाह रजनीति भैरवरागःत
ल्लक्षणं सरोवरस्थेस्फटिकस्यमंडपेसरोरुहैः शंकरमर्चयं
ती तालप्रभेदप्रतिपन्नगीतागौरीतनुर्नारदभैरवीयं इति
हरिर्हरिरवेदानुकारेअव्ययं हेकेशवयाहि हेमाधवयाहि को-
पाधिक्येनद्विरुक्तिः कैतववादंच कपटवाक्यंमावद हेसरसी
रुहलोचनकमलनयनतांनायिकांअनुसरगच्छयातवविषा
दंहरतिदूरीकरोति कथंविषादवत्वमित्याह हेकृष्णातवन
यनं नेत्रं स्फुटंव्यक्तं तस्यानुरागमिववहतिधारयति कीदृशं
नयनंरजनीजनितेनरात्रिकृतेनगुरुणातिशयेनजागररागे
णजागरोत्पन्नलोहितरागेणकषायितंआरक्तंकृतं पुनःकीदृ
शंरात्रिजागरेणालसोमंथरोनिमेषः पक्ष्मचलनंयस्य कीदृ
शंअनुरागं उदितः कथितः रसस्यअन्यकामिनीविषयशृं
गाररसस्याभिनिवेशस्तत्परतायेन सालक्ष्मीः तस्याःधव

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

इत्यनेनतत्सतिखेनवांचल्यंद्योतितं केशवेत्यनेनक्लेशनाश कत्वेनापिक्लेशशब्दानुवृत्तित्वमनुचितमिति द्योतितं॥१॥

कज्जलमलिनविलोचनचुंबनविरचित
नीलिमरूपं॥दशनवसनमरुणंतवकृष्ण
तनोतितनोरनुरूपं॥२॥

ननुत्वदन्वेषणार्थंजागरान्मेनेत्रयोर्लौहित्यमलंदुःशे कयेत्यतआह कज्जलेति हेकृष्णातवारुणंतांबूलरागेण लोहितंदशनवसन अधरः तनोःशरीरस्यानुरूपंसादृश्यंत नोतिविस्तारयति कीदृशंदशनवसनं कज्जलेनांजनेनमलिने श्यामेयेविलोचनेनेत्रे तयोश्चुंबनेनविरचितंकृतं नीलिमरूपं श्यामतारूपंयस्य आरक्ताधरस्यनेत्रचुंबनेनश्यामताप्रतिपा दनात् तनोरनुरूपत्वं अन्यस्यांकामिन्यांकृष्णस्यानुरागःसू चितः॥२॥

वपुरनुवहतितवस्मरसंगरखरनखरक्ष
तरेखं॥मरकतशकलकलितकलधौतलि
पेरिवरतिजयलेखं॥३॥

किंच वपुरिति हेकृष्णतववपुःशरीरंरतिजयलेखंसुरत विजयप्रशस्तिलेखनपत्रं अनुवहति अनुकरोति कीदृशंवपुः स्मरसंगरेकामयुद्धेखराणांतीक्ष्णानांनखानांक्षतान्येवरेखायत्र कस्याइव मरकतशकलेनीलमणिखंडेकलितानिर्मितायाकलधौ तलिपेः सुवर्णविरचिताक्षरस्यविन्यासस्येववपुषोनीलत्वान्नख

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

...क्षतस्फुटकलान्मरकतखंडार्पितस्वर्णाक्षरसाम्यं॥३॥

चरणकमलगलदलक्तकसिक्तमिदंतव-
हृदयमुदारं॥दर्शयतीवबहिर्मदनद्रुम
नवकिसलयपरिवारं॥४॥

ननुमार्गेविस्मृत्यगच्छतोमेवपुषिवनेकंटकादिस्पर्शादेवंदृश्यतेनतुनखांकमित्यतआह चरणेति इदंउदारं मनोहरंतवहृदयंमदनद्रुमस्यकामवृक्षस्यहृदयांतर्गतस्य नवकिसलयपरिवारंनूतनपल्लवसमूहंबहिर्दर्शयतीवप्रकटयतीव कीदृशंहृदयं चरणकमलादन्यस्त्रीपादपद्मात् गलतास्रवताअलक्तकेनसिक्तंउक्षितंकिसलयपदेनैवनूतनत्वविधानात्पुनर्नवपदंअद्यतनत्वसूचनार्थंरूपकालंकारश्चात्र॥४॥

दशनपदंभवदधरगतंममजनयतिचेत
सिखेदं॥कथयतिकथमधुनापिमयासह
तववपुरेतदभेदं॥५॥

ननुतवखेदनलयाऐक्यान्मधृदयेव्याधिर्विक्रियाजाताकथमन्यथाकल्प्यते सत्यंयदितवमयाऐक्यंनस्यात्तदातवशरीरगतक्षतेनममवेदनानस्यादित्याह दशनेति भवदधरगतं तवाधरोष्ठेवर्तमानंदशनपदंअन्यकामिनीदंतक्षतंममचेतसिखेदंसंतापंजनयतिकरोतीत्यर्थः एतादृशंनवपदं तववपुरधुनापीदानीमपिमयासह अभेदंकथंकथयतीत्यर्थः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

नविद्यतेभेदोयस्यपूर्वंमयासहतववपुषो भेदोनास्तीतिस्थितं इदानींतुतद्विपरीतमितिमयासहएवेति विभावनालंकारश्चात्र॥५॥

बहिरिवमलिनतरंतवकृष्णमनोपिभवि ष्यतिनूनं॥कथमथवंचयसेजनमनुगत मसमशरज्वरदूनं॥६॥

ननुतवोपायनार्थंकमलत्रोटनंकृतवतिमयिपद्मकोशादापतताभृंगेणममाधरोदष्टोनतुदंतक्षतमित्यतआह बहिरिवेति नूनमेवेतिवितर्के हेकृष्णतवचित्तमपिबहिरिवमलिनतरंश्यामंभविष्यतीतिनूनंतर्कयामि ननुमालिन्यंत्वयाकथंज्ञातमित्यतआह अथान्यथात्वं असमशरः कामस्तस्यज्वरेणपीडयादूनमुपतप्तंअनुगतंत्वामनुसृतंमल्लक्षणंजनंकथंवंचयसेप्रतारयसि अतःकृष्णत्वंकौटिल्यमेवेति नूनमितिशब्दोपादानादुत्प्रेक्षालंकारः॥६॥

भ्रमतिभवानबलाकवलायवनेषुकिमत्र विचित्रं॥प्रथयतिपूतनिकेववधूवधनिर्द यबालचरित्रम्॥७॥

भ्रमतीति अबलाकवलायस्त्रीणांग्रसनार्थंभवान् वनेषुअरण्येषुभ्रमति अत्रस्त्रीपापेकिंविचित्रंनकिमपीत्यर्थः यतःपूतनिकेवराक्षसीववधूवधेस्त्रीवधार्थंनिर्दयंदयारहितं

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

तवबालचरित्रं बालचेष्टितं प्रथयति ख्यापयति यद्वा हे वधूवध निर्दयशिशुनात्वया पूतना राक्षसीहता तस्मिंस्त्वयि यूनि संप्रति कोमलांगीनामस्माकं मारणे किं चित्रमिति भावः ॥ ७ ॥

श्रीजयदेवभणितरतिवंचितखंडितयुवतिविलापं ॥ शृणुत सुधामधुरं विबुधा विबुधालयतोपि दुरापं ॥ ८ ॥ इति श्रीगीतगोविंदे सप्तदशः प्रबंधः ॥ १७ ॥

श्रीजयदेवेति हे विबुधाः पंडिताः श्रीयुतजयदेवेन भणितं उक्तं ध्यासौ रतिवंचितखंडितयुवतिविलापस्तं शृणुत आकर्णयत कीदृशं विलापं सुधातोपि मधुरं मनोहरं तत्र हेतुमाह विबुधालयतोपि स्वर्गादपि दुरापं दुर्लभं तदुक्तं तवकथामृतमिति श्रीभागवते ॥ ८ ॥

श्लो० ॥ तवेदं पश्यंत्याः प्रसरदनुरागं बहिरिव प्रियापादालक्तच्छुरितमरुणद्योतिहृदयम् ॥ ममाद्य प्रख्यातप्रणयभरभंगेन कितव त्वदालोकः शोकादपि किमपि लज्जां जनयति ॥ १ ॥

तवेदमिति हे कितव वंचक त्वदालोकस्त्वद्दर्शनं प्रख्यातस्य लोकप्रसिद्धस्य प्रणयभारस्य प्रेमातिशयस्य भंगेन नाशेन यः शोकस्तस्मादपि मम अद्य किं अनिर्वचनीयां लज्जां जनयति कीदृश्या मम तवेदं हृदयं पश्यंत्याः कीदृशं

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

हृदयं प्रियायाः पादालक्तकेन चरणसंबंधियावकेनच्छुरितंव्याप्तं अतएव अरुणारक्ताछायादीप्तिर्यस्य तादृशं अरुणद्योतीतिपाठे अरुणः संध्यारागस्तद्वत् द्युतिशीलमस्येति तादृशं हृदयंसमीक्ष्यकृते बहिः प्रसरदनुरागमिव बाह्यप्रसरन् अनुरागोयस्यरागोहि अरुणोवर्ण्यते ॥ १ ॥

श्लो० ॥ प्रातर्नीलनिचोलमच्युतमुरःसंवीतपीतांशुकं राधायाश्चकितंविलोक्यहसतिस्वैरंसखीमंडले ॥ व्रीडाचंचलमंचलंनयनयोराधायराधानने स्वादुस्मेरमुखोयमस्तुजगदानंदाय नंदात्मजः ॥ २ ॥

इतिश्रीकविराजश्रीजयदेवकृतेगीतगोविंदेमहाकाव्येखंडितावर्णनेविलक्षलक्ष्मीपतिर्नामअष्टमःसर्गः ॥ ८ ॥

इदानीं सर्गांतेकविर्भक्तानामाशिषयति प्रातरिति नंदात्मजोयंकृष्णः जगदानंदायास्तु लोकसुखार्थंभवतु कीदृशः व्रीडयाचंचलंलज्जयाचलासमानंनयनयोर्नेत्रयोरंचलंअपांगंकटाक्षः राधानने राधामुखे आधाय अर्पयित्वा स्मेरंमुखमीषद्धास्ययुक्तंमुखंयस्यसः स्मेरमुखकारणमाह कस्मिन्सति प्रातः उषसि अच्युतंकृष्णंनीलंनिचोलंवस्त्रंयस्यश्यामवस्त्रधरंविलोक्यदृष्ट्वा अनुचराधायाउरः वक्षस्थलंसंवीतपीतांशुकंपरिधानीकृतपीतांबरंचकितंसविस्मयंयथास्यात्तथावि

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

लोक्यसखीसमूहेस्वैरंशनैः हसतिसति वस्त्रपरिवर्तनमालो क्यजहासइत्यर्थः बिलक्षइतिविस्मयान्वितः विषयीइति भावप्रसिद्धः शब्दः शार्दूलविक्रीडितंवृत्तम् ॥२॥

अथनवमः सर्गः प्रारभ्यते.

श्लोकः ॥ अथतांमन्मथखिन्नांरतिरसभि न्नांविषादसंपन्नां ॥ अनुचिंतितहरिचरि तांकलहांतरितामुवाचरहः सखी ॥१॥

प्रणयकोपात् हरिमधिक्षिप्येदानींकृतपश्चात्तापांसखी आह अथेति अथानंतरंमंगलार्थंवा सखीतांराधांउवाचो क्तवती कीदृशींतांमन्मथेनकामेनखिन्नांदीनांपुनःकीदृ शींरतिरसेनभिन्नांरहितां अतएवविषादेनदुःखेनसंपन्नांयु- क्तांअतएवानुवारंवारंचिंतितंहरेश्चरितंपुराविलासोययातां क लहेनप्रीतिकलहेनांतरितांव्यवहितां अत्रकलहांतरितेताना- यिकावर्ण्यते तल्लक्षणंभरतेनोक्तं प्राणेश्वरंप्रणयकोपभरेण लभ्यंतंचाटुकारमनिराद्वधार्यपश्चात् संतप्यतेमदनवन्हि शिखासहस्रैर्बाष्पाकुलानुकलहांतरितेतिसास्यादिति ॥१॥

अथअष्टादशप्रबंधो गुर्जरीरागेण यतितालेगीयते.

हरिरभिसरतिवहतिमधुपवने ॥ किमप रमधिकसुखंसखिभवने ॥ माधवेमाकु रुमानिनिमानमये ॥ ध्रु० ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

गुर्जरीरागः यतितालस्क हरिरिति अयेहेमानिनि अभिमानवतीराधे माधवेकृष्णे मानं अभिमानं माकुरु माकार्षीरिति प्रार्थनायांलोट् यतः मधुपवने वसंतवायौवहतिसति हरिः अभिसरतिस्वयमेवत्वदीयांसंकेतभूमिमागच्छतीति हेसखिराधे भवनेपिगृहेपि अपरं अधिकस्कूरवं अतिशयस्करवं किं अपितुनकिंचिदस्ति नायकस्यस्वयमागमनात् कोपोनयुक्तइत्यर्थः १

तालफलादपि गुरुमतिसरसं॥ किंविफलीकुरुषे कुचकलशं॥ २॥

अपिच तालेति हेराधे तालफलादपिकाठिण्येनस्थौल्येनवर्तुलत्वेनच तालफलादपिगुरुं अधिकं कुचकलशंस्तनघटं किंकिमर्थंविफलीकुरुषे कृष्णहस्तव्यापारपरिशीलनाभावाद्वैफल्यमितिभावः कीदृशं अतिसरसं अतिशयरसयुक्तं तस्मिन्दृष्टेयूनांरसाविर्भावाधृदयाल्हादकरमितियावत्॥ २॥

कति न कथितमिदमनुपदमचिरं॥ मा परिहर हरिमतिशयरुचिरं॥ ३॥

ननुयदाहरिरागतस्तदात्वयानकथितमित्यतआह कतीति हेराधेइदं अनुपदं स्थाने अचिरंसांप्रतं कतिकतिवारान्मया नकथितं किंतुबहुकथितमेव किंतदित्यतआह त्वंअतिशयरुचिरंअतिकमनीयंहरिंकृष्णंमापरिहर मावज्ञासीरितिमात्यज॥ ३॥

किमिति विषीदसि रोदिषि विकला॥ विहसति युवतिसभा तव सकला॥ ४॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

एवंरूपमुखींप्रत्याह किमितीति विकलाअसावधानेंद्रिया किमितिकस्मात्विषीदसिदुःखिताभवसि रोदिषिचक्रंदसि मदुक्तनिराकरणात् इदानींविषादोरोदनंचव्यर्थमिति संकलासंपूर्णायुवतिसभातरुणीसमाजः भवत्याविहसतिउपहासंकरोति तवेतिकर्मण्यपीतिकेचिदितिषष्ठी॥ ४॥

मृदुनलिनीदलशीतलशयने॥ हरिमवलोकय सफलय नयने॥ ५॥

तर्हिकिंकरोमीत्यतआह मृदुनलिनीदलेनकोमलपत्रेणाशीतलेकृतेशयनेशय्यायांस्थितंहरिंकृष्णमवलोकयपश्यदर्शनान्नयनेनेत्रेसफलयसफलेकुरु॥ ५॥

जनयसि मनसि किमिति गुरुखेदं॥ शृणु मम वचनमनीहितभेदम्॥ ६॥

विचारयंतींप्रत्याह हेराधेत्वंमनसिगुरुखेदंमहद्दुःखंकिमितिजनयसिउत्पादयसि तस्मान्ममवचनंवाक्यंशृणु आकर्णय कीदृशंवचनं अनीहितः अनाकांक्षितोभेदोविरहोयेनभवत्याहितमेववचनंवदामीत्यर्थः अतएवशृणु॥ ६॥

हरिरुपयातु वदतु बहुमधुरं॥ किमिति करोषि हृदयमतिविधुरं॥ ७॥

कीदृशंवचनमित्यतआह हरिरिति हरिःकृष्णउपयातुत्वदंतिकं आगच्छतु बहुमधुरंतथानुनयवचनंवदतुत्वंहृदयंमनः अतिविधुरंअतिविव्हलंकिमिति करोषिनकिंचित्स

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

योजनमित्यर्थः ॥७॥

श्रीजयदेवभणितमतिललितं ॥ स्फरनयतु रसिकजनं हरिचरितं ॥८॥ इति श्रीगीत गोविंदे अष्टादशः प्रबंधः

श्रीजयदेवेति श्रीजयदेवभणितंउक्तंहरिचरितंकर्तृरसिकजनंकृष्णोभाविकंजनंस्फरवयतुस्फरिवनंकरोतु कीदृशं अतिललितंअतिसंदरंश्राव्यमित्यर्थः सुविनीतमितिपाठेकीदृशंजनं सुविनीतंअतिविनययुक्तं ॥८॥

श्लोक ॥ स्निग्धे यत्परुषासि यत्प्रणमति स्तब्धासि यद्रागिणि द्वेषस्थासि यदुन्मुखे विमुखतां यातासि तस्मिन् प्रिये ॥ तद्युक्तं विपरीतकारिणि तव श्रीखंडचर्चाविषं शीतांशुस्तपनो हिमं हुतवहः क्रीडामुदो यातनाः ॥१॥

इदानींप्रणतमपिप्रियमतिरोषात् त्यजंतींराधांनिंदतीसखी प्राह स्निग्धइति हेविपरीतकारिणिविपर्ययविधायिनिराधेत्वं-स्निग्धेमधुरवादिनितस्मिन्प्रियेकृष्णेयत्परुषासिनिष्ठुरभाषि-णिअसिवर्तसे किंचतस्मिन्प्रियेप्रणमतिसतिविनययुक्तेसति यत्स्तब्धासिस्थाणुवत्स्थितासि यत्रागिणिसानुरागेप्रियेद्वेषस्थासि असंतुष्टासि यत्उन्मुखेसंमुखेतस्मिन्प्रियेविमुखतां परावृत्ततांयातासि तस्मात्श्रीखंडचर्चाचंदनकथापितवविष

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

मिवशीतांशुश्चंद्रस्तपनः सूर्यइवहिमंतुषारः हुतवहः अग्निरिव क्रीडामुदः क्रीडासंतोषाः यातनावेदनाः युक्तमेवयोग्यमेवतवमदीयवचनंविपरीतकारित्वात् विरोधालंकारः शार्दूलविक्रीडितवृत्तं ॥१॥

श्लो०॥ अंतर्मोहनमौलिघूर्णनचलन्मंदारविस्रंसनः स्तब्धाकर्षणदृष्टिहर्षणमहामंत्रः कुरंगीदृशां॥ दृप्यद्दानवदूयमानदिविषद्दुर्वारदुःखापदां भ्रंशः कंसरिपोर्व्यपोहयतुवः श्रेयांसि वंशीरवः॥२॥

इति श्रीकविराजश्रीजयदेवकृते गीतगोविंदे महाकाव्ये मुग्धमुकुंदवदनोनाम नवमःसर्गः

इदानींकविर्भक्तानाशिषयति अंतरिति कंसरिपोःकृष्णस्यवंशीरवोवेणुनादः वःयुष्माकंभक्तानांअश्रेयांसिअशुभानिव्यपोहयतुखंडयतु कीदृशोवंशीरवः कुरंगीदृशांहरिणीनयनानांअंतर्मोहनंमनोमोहः मौलिघूर्णनंसाधुसाध्वितिशिरःकंपेनचलन्मंदारविस्रंसनंगुंफितपारिजात पुष्पाधःपतनंसालिकभावात् स्तब्धाकर्षणंस्तब्धस्यअनिच्छोराकर्षणंदृष्टिहर्षणंनेत्रोत्साहः एतेषुसर्वेषुमहामंत्रः वंशीरवाकर्षेसर्वानायिकाः कामभावापन्नाभविष्यंतीतिभावः पुनःकीदृशः दर्पवद्भिर्दानवैर्दैत्यैर्दूयमानानांदिविषदांदेवतानांदुर्वाराअनिवार्याः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

आपदः स्वसाधनीभूताः विपत्तयस्तासांभंशः नाशकःवंशी रवंश्रुत्वादुःखिताअपिदेवाः सुदमुद्वहंतीत्यर्थः मूग्धोमूढः अलसः ॥२॥

## अथ दशमः सर्गः प्रारभ्यते.

श्लोक ॥ अत्रांतरे मसृणरोषवशामसीम
निःश्वासनिःसहमुखीं सुमुखीमुपेत्य ॥
सव्रीडमीक्षितसखीवदनां दिनांते सानं-
दगद्गदपदं हरिरित्युवाच ॥१॥

इदानींसोत्कंठः कृष्णोराधांदृष्ट्वाअनुनयन्नाह अत्रेति अत्रांतरेअस्मिन्नवसरेहरिः दिनांते संध्यासमयेतांसुमु-खींराधांसमुपेत्यसमीपमागत्यसानंदानिअतएवगद्गदानि कंठादस्पंनिर्गच्छंतिपदानियस्यांक्रियायांतद्यथाभवतितथा वक्ष्यमाणंउवाच कीदृशींराधांमसृणस्यकर्कशस्यक्रोधस्य वशांअधीनांपुनः किंभूतांअसीमस्यमहतोनिश्वासस्यनिः सहंसोढुं असमर्थमुखंयस्याः सातांकोपवदनामित्यर्थः पुनःकिंभूतांसव्रीडंसलज्जंईक्षितंदृष्टंसख्याः वदनंमुखंय यासातांपश्यकृष्णाचेष्टितमित्यर्थः ॥१॥

## अथ एकोनविंशः प्रबंधो देशवराडीरागे ण आड्डवताले गीयते.

वदसि यदि किंचिदपि दंतरुचिकौमुदी ह
रति दरतिमिरमतिघोरं ॥ स्फुरदधरसीध-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

वे तववदनचंद्रमा रोचयति लोचनचको
रं ॥१॥ प्रिये चारुशीले प्रिये चारुशीले मुं
च मयि मानमनिदानं॥ सपदि मदनानलो
दहति मम मानसं देहि मुखकमलमधुपा
नम्॥ ध्रु०॥

उक्तमर्थं गीतेनाह वदसीति गीतस्यास्य देशवराडिरागः अष्टतालीतालः रागलक्षणं आरब्धगमनमुद्रानिद्राघूर्णायमाननयनाढ्या रुवशायिनिनिजदयितेदेशवराडिभवेद्रोरीति लघुद्रुतोलघुश्चेत्यष्टतालीप्रकीर्तितेति गीतार्थस्तु हे चारुशीलेमनोहरसद्वृत्ते प्रियेराधे त्वंमयि अनिदानं अकारणं मानंमुंचत्यज किमितिमानत्यागस्तत्राह मदनानलः कामाग्निर्ममानसंदहति अतः कारणात्सपदितत्क्षणमेवमुखकमलमधुपानंमुखमेवपद्मं तत्संबंधिमधुपानं देहिमधुना वन्हिदाहः प्रशाम्यति ध्रुवपदं हेराधेत्वंयदियदाकिंचिदपि वदसितदानवदंतानांयारुचिः दीप्तिः सेवकौमुदी चंद्रज्योत्स्ना अतिघोरंअतिशयेनभयंकरंदरः भयंसएवतिमिरमंधकारंहरतिनाशयति अनुचतववदनंचंद्रमाइवसः स्फुरदधरसीधवेदीप्यमानाधरामृतार्थंतादर्थ्येचतुर्थी ममलोचनचकोरंनेत्रपक्षिविशेषंरोचयतिरुचिं इच्छांकारयति ममलोचनचकोरंचकोरः पाक्षिविशेषःचंद्रामृतलोलुपोभवत्येव।

सत्यमेवासि यदि रुदति मयि कोपिनी

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

देहि खरनखरशरघातं॥ घटय भुजबंधनं जनय रदखंडनं येन वा भवति सुखजातम्॥२॥

मृषारोषं प्रकाशयंतीमाह सत्यमिति हे सुदति शोभनदंते यदि मयि विषये सत्यमेव कोपिनी क्रोधवती असि तदा खरास्तीक्ष्णा ये नखराः नखास्त एव शरा नाराचास्तैर्घातं प्रहारं देहि तेनापि चेन्न तुष्यसि तर्हि भुजाभ्यां बंधनं घटय कुरु रदैः दंतैः खंडनं घातं जनय विरचय वा अथवा येन मुष्ट्यादिना सुखजातं सुखसमूहो भवति तदेव कुरु प्रभ्रूणां हि सापराधेषु जनेषु ताडनबंधनखंडनादयो दंडाः समुचिताः॥२॥

त्वमसि मम भूषणं त्वमसि मम जीवनं त्वमसि मम भवजलधिरत्नम्॥ भवतु भवतीह मयि सततमनुरोधिनी तत्र मम हृदयमतियत्नम्॥३॥

ननु याति प्रियासादं दंडं विदधातु किं मया तत आह त्वमसीति हे राधे त्वं मम जीवनं प्राणोसि त्वां विना स्थातुमशक्यत्वात् त्वं मम भूषणं अलंकारोसि त्वं मम भवजलधौ संसारसागरे रत्नमसि जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते इति स्त्रीरत्नं उक्तं इह एतादृशे मयि भवती सततं निरंतरं अनुरोधिनी अनुकूला भवतु तवानुकूल्ये मम हृदयं मनः अतियत्नं अतिशययत्नयुक्तं भवति तवानुकूल्यार्थं अतिशयं यत्नं करोतीत्यर्थः३

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

नीलनलिनाभमपि तन्वि तव लोचनं धार यति कोकनदरूपम्॥ कुसुमशरबाणभा वेन यदि रंजयसि कृष्णमिदमेतदनुरूपं४

नीलेति हेतन्विकृशांगिनीलनलिनस्यनीलोत्पलस्येवा भाकांतिर्यस्य तत्तवलोचनंकोकनदरूपंरक्तोत्पलसरूपतांधार यतिधत्तेरोषारुणत्वात् यदिइदंचक्षुः कृष्णंश्यामंकुसुमशरः कामस्तस्यबाणः पुष्पाणितेभ्योभावउत्पत्तिर्यस्यमधुनस्तेन रंजयसिरक्तंकरोषि तदाएतद्रक्तंरूपं अनुरूपंयोग्यंभवति य दिमधुपानंकरोषितदानेत्रस्यरक्तत्वमुचितंनरोषादितिभावः४

स्फुरत कुचकुंभयोरुपरि मणिमंजरी रं जयतु तव हृदयदेशं॥ रसतु रसनापि त व घनजघनमंडले घोषयतु मन्मथनिदे शम्॥ ५॥

किंचित्प्रसन्नांवीक्ष्याह स्फुरत्विति हेराधेमणिमंजरी हारलतात्वत्कुचकुंभयोः कुचकलशयोरुपरिस्फुरतुशोभतां सारत्नलता तवहृदयदेशंवक्षः प्रदेशंरंजयतुस्वरश्मिभिः शो भयतु तवघनजघनमंडलेनिबिडकटिपुरोभागदेशेरशनापि कांच्यपिरसतुशब्दंकरोतु साकांचीमन्मथनिदेशंकामाज्ञां घोषयतुशब्दायतांवचनचातुर्येणस्फुरतु मणिमंजरीरसतु रसनादिइत्यादिनाविपरीतरतंयाचते॥५॥

स्थलकमलगंजनं ममहृदयरंजनं ज-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

नितरतिरंगपरभागम्॥ भण मसृणवा
णि करवाणि चरणद्वयं सरसलसदलक्त
कसुरागम्॥ ६॥

हेमसृणवाणि स्निग्धवचने भणाज्ञापय अहंतवचरण द्वयंसरसः सांद्रः सहरसेनशृंगारेणवर्ततेइति वासरसंयथा स्यादेवंलसत् शोभमानः अलक्तकरागोयावकरागो यत्रएता दृशंकरवाणिकुर्यां प्रार्थनायांलोट् कथंभूतंचरणद्वयं स्थल कमलस्यगंजनंतिरस्कारकंसदृशमित्यर्थः पुनःकीदृशं मम हृदयरंजनं अनुरागकारकं पुनःकीदृशं जनितउत्पादितोरति रंगेस्फुरतकौशलेसंभोगरागस्यवापरभागः परस्परशोभायेन मयालक्तकेनचेदिदंरज्यते तदेदमपिक्रौंचबंधादौममहृदये लग्नेलग्नांमत्सरांशोभांपरस्परंदास्यतीतिभावः॥ ६॥

स्मरगरलखंडनं मम शिरसि मंडनं दे-
हि पदपल्लवमुदारं॥ ज्वलति मयि दारु
णो मदन कदनानलो हरतु तदुपाहित
विकारम्॥ ७॥

स्मरेति त्वंउदारंमनोहरंपदपल्लवं ममशिरसिमंडनंअ- लंकारमिवदेहि अर्पय कीदृशंपदपल्लवं स्मरगरलस्यकाम विषस्य खंडनंनाशकं कामपीडानिवर्तकमित्यर्थः मयिदारु णः क्रूरकर्मामदनकदनानलः कामपरितापवह्निः ज्वलति दीप्यते पदपल्लवंकर्तृ तदुपाहितविकारंमदनकृतोपतापंहरतु

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

शिरःपीडानिवर्त्तनेनशरीरपीडानिवृत्तिरितिशिरसिदानं अ थवापल्लवाच्छादितशिरसः सूर्यतापोनभवतीति॥ ७॥

इति चटुलचाटुपटुचारुमुरवैरिणो राधिकामधिवचनजातं॥ जयति जयदेव कविभारतीभूषितं मानिनीजनजनित शातम्॥ ८॥ इति श्रीगीतगोविंदे ऊनविंशतितमः प्रबंधः॥ १९॥

इतीति इत्यमुनाप्रकारेणमुरवैरिणः कृष्णस्यराधिकां अधिअनुराधिकांलक्षीकृत्यप्रोक्तंवचनजातंवाक्यसमूहोजयतिउत्कर्षेणवर्त्तते कीदृशंच टुलंचाटुप्रीतियुक्तंपटुचतुरं चारुसुकुमारं पुनःकीदृशंजयदेवकवेः भारत्यावाण्याभूषितंमानिनीजनस्यजनितंशातंसुखंयेनतत्ताहशंजयतिपद्मावतीरमणजयदेवकविभारतीभणितम्मतिशातमितिपाठांतरे पद्मावतीजयदेवस्यपत्नीतस्याः रमणोवल्लभोयोजयदेवस्तेनभारतीसंज्ञयाकविस्वंवर्णितं पुनःकीदृशं अतिशातं अतिशायितसुखंयस्मात्ताहशमिति व्याख्यानंमंदंतथासतियौनरुक्त्यापत्तेः प्रथमपाठस्तुसमीचीनएव॥ ८॥

श्लोक॥ परिहर कृतातंके शंकां त्वया सततं घनस्तनजघनया क्रांते स्वांते परानवकाशिनि॥ विशति वितनोरन्यो धन्यो न कोपि ममांतरं स्तनभरपरीरं

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

आरंभे विधेहि विधेयताम् ॥१॥

इदानीमात्मानं निरपराधं ज्ञापयन् संभोगार्थमुत्साहय न्नाह परिहरेति हे कृतातंके विहितकोपे राधे त्वं शंकां त्यज त्वया कांते व्याप्ते सति वितनोः कामादन्यो धन्यः जनः कोपि मम मां तरं अभ्यंतरं न विशति न प्रविशति कीदृश्या त्वयाघ नेकठिने स्तनजघने यस्याः तया कीदृशे स्वांते अतएव परा नवकाशिनि अन्यस्यावकाशशून्ये हे प्रणयिनि यतो ममां-तरं काम एव विशति अतस्तनभरपरिरंभारंभे स्तनातिशयालिंगनोद्योगे विधीयतां कर्तव्यतां विधेहि कुरु मामालिंगे-त्याशयः ॥१॥

श्लोकः ॥ मुग्धे विधेहि मयि निर्दयदंतदंशं दोर्वल्लिबंधनिबिडस्तनपीडनानि ॥ चंडि त्वमेव मुदमंचय पंचबाणचंडालकांडदलनादसवः प्रयांति ॥२॥

यद्येवं न प्रत्येषि तदा मय्यपराधानुकूलं दंडमाचरेत्याह मुग्धेति हे मुग्धे मूढे सुंदरि वा मयि निर्दयदंतदंशं दयारहितदंतक्षतं विधेहि कुरु किंच दोर्वल्लिबंधो भुजलताबंधस्तेन निबिडं दृढं यथा स्यात्तथा स्तनाभ्यां पीडनानि विधेहि हे चंडि कोपनशीले त्वमेव मम मुदं प्रीतिं अंचय जनयन् त्वन्यस्यां ममानुराग इत्यर्थः उद्धहेति पाठे कुरु नोचेत् पंचबाणः कामः स एव चंडालस्तस्य कांडदलनाद्बाणक्षतात् असवः मम प्राणाः प्रयांति गच्छंति अ

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

तोमयिप्रसीदेत्यर्थः ॥२॥

श्लोकः॥ शशिमुखि तव भाति भंगुरभ्रू र्युवजनमोहकरालकालसर्पी॥ तदुदित भयभंजनाय यूनां त्वदधरसीधुसुधैव सिद्धमंत्रः॥३॥

ननुकोपोनास्त्येवेत्यतआह शशीति हेशशिमुखिचंद्रवदने तवभंगुरभ्रुकुटिः कुटिलाभ्रूर्भातिशोभतेकीदृशी युवजनानां तरुणजनानांमोहायकरालाभीषणाकालसर्पीकृष्णाहिवधूः तस्याः भ्रुवः सकाशादुदितंउत्पन्नंयद्भयं तस्यभंजनायनाशाययूनांतरुणानां तवाधरसीधुमद्यंतदेवसुधापानसास्यान्माधुर्याच्चसैवसिद्धमंत्रः साधितमंत्रः विषापहरणार्थंअधरपानंदत्वातवकोपसर्पदष्टस्यममजीवनंसंपादयेतिभावः॥३॥

श्लोक॥ व्यथयति वृथा मौनं तन्विप्रपंचय पंचमं तरुणि मधुरालापैस्तापं विनोदय दृष्टिभिः॥ सुमुखि विमुखीभावं तावद्विमुंच न वंचय स्वयमतिशयस्निग्धो मुग्धो प्रियोहमुपस्थितः॥४॥

व्यथयतीति हेतन्विसुंदरि तववृथामौनंमांव्यथयति तस्मात् हेतरुणिमधुरालापैः कोमलवचनैः पंचमरागंप्रपंचय उद्गिर दृष्टिभिः अवलोकनैस्तापंमानसंतापंविनोदयअपसारय हेसुमुखिसुवदनेविमुखीभावंदुष्टदृष्टित्वंविमुंच

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

त्यज हेमुग्धेज्ञानशून्ये अहंप्रियः स्वयंआकरणंविनैवउप स्थितः आगतः अतएवमेवचनंनवंचयनोल्लंघस्व कीदृशः प्रियः अतिशायस्निग्धः महावत्सलः स्वयमागतः हातुंनोचितइतिभावः ॥४॥

श्लोक ॥ बंधूकद्युतिबांधवोयमधुरः स्निग्धो मधूकच्छविर्गंडश्चंडि चकास्ति नीलनलिनश्रीमोचनं लोचनं॥ नासाभ्येति तिलप्रसूनपदवीं कुंदाभदंति प्रियेप्रायस्त्वन्मुखसेवया विजयते विश्वं सपुष्पायुधः ॥५॥

अधुनामानापनोदनाय तदंगस्तुतिंकरोति बंधूकेति हेचंडिकोपनशीले तवायमधरः बंधूकपुपुष्पस्यद्युतिःकांतिस्तस्या बांधवोमित्रसदृशश्चकास्तिशोभते तथास्निग्धश्चिक्कणः गंडः कपोलश्चकास्ति कीदृशः मधूकपुष्पवच्छविर्दीप्तिर्यस्यसः तथा तवलोचनंनेत्रंनीलनलिनश्रियंनीलोत्पलस्यकांतिंमोचयति तवनासा नासिकातिलप्रसूनस्यतिलपुष्पस्यपदवींमार्गसादृश्यमित्यर्थः अभ्येति प्राप्नोति हेकुंदाभदंति कुंदपुष्पस्येवाभायेषांतादृशादंताय स्यास्तादृशि हेप्रियेवल्लभे प्रायइतितर्कयामि प्रसिद्धः पुष्पायुधः पुष्पमेवायुधंशस्त्रंयस्यसः कामस्त्वन्मुखसेवयाविश्वं जगद्विजयतेवशीकरोतीत्यर्थः यानिकामस्यपुष्पायुधानि

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

तानि बंधूकमधूकनीलोत्पलतिलकुंदपुष्पादीनि त्वन्मुखेवर्तं तइतिसेवाकारबंधूकइतिदुपहरियामधूकइतिमहुआंइति कान्यकुब्जभाषायां ॥ ५ ॥

श्लोक ॥ दृशौ तव मदालसे वदनमिंदुम त्यान्वितं गतिर्जनमनोरमा विधुतरंभमू रुद्वयं ॥ रतिस्तवकलावती रुचिरचित्रलेखे भ्रुवावहो विबुधयौवतं वहसि तन्वि पृ थ्वीगता ॥ ६ ॥

दृशाविति अहोइत्याश्चर्ये हेतन्विस्कंदरित्वंपृथ्वीगता भूम्यांस्थितापिविबुधयौवतंदेवयुवतीनांसमूहंवहसि केनप्र कारेणेत्यतआह तवदृशौनयनेमदेनालसेमंथरे अवलोक नायसंदायतः तववदनंमुखंइंदुमत्याचंद्रबुध्या अन्वितं युक्तं त्वन्मुखदर्शनेनसादृश्याचंद्रबुद्धिर्भवतीत्यर्थः तवगति र्गमनंजनमनोरमा तवोरुद्वयंजंघायुग्मंविधुतास्वशोभया- तिरस्कृतारंभाकदलीयेन तवरतिः सुरतक्रीडाकलावतीका मकलाकौशलयुक्ता तवभ्रुवौरुचिराचित्राणांलेखाययोस्ते यथाचित्रेश्यामालेखाविलिख्यते तथेति तदनयापदयोज नयामदालसा, इंदुमती, मनोरमा, रंभा, कलावती, चित्रले खासंज्ञकाः अप्सरसः प्रतिपादिताः पृथ्वीगतेत्यपिच एकस्या मपित्वयिसर्वासामप्सरसांगुणाः वर्ततइत्याश्चर्यं प्रेयोनामा लंकारः पृथ्वीकंचेदंछंदः ॥ ६ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

श्लो०॥ प्रीतिं वस्तनुतां हरिः कुवलयापीडेन सार्धं रणे राधापीनपयोधरस्मरणकृत् कुंभेन संभेदवान्॥ पत्रे बिभ्यति मीलति क्षणमपि क्षिप्रं तदालोकनाद्व्यामोहेन जितं जितं जितमभूद्व्यालोलकोलाहलः ७

इतिश्रीकविराजश्रीजयदेवकृते गीतगोविंदे महाकाव्ये मानिनीवर्णने चतुरचतुर्भुजोनाम दशमः सर्गः १०

कविः सर्गांते आशिषं प्रयुंक्ते प्रीतिमिति हरिः कृष्णो वः युष्माकं गायतां शृण्वतां प्रीतिमानंदं तनुतां विस्तारयतु कीदृशः रणे संग्रामे कुवलयापीडेन कंसहस्तिना सार्द्धं सह कुंभस्थले हस्तेन संभेदवान् संबद्धः अतस्तत्र कुंभे राधापीनपयोधरस्मरणकृत् राधिकायामांसलस्तनस्मृतियुक्तः हस्तिदर्शनेनपीनकुचस्मरणं युज्यत एव तदुक्तं सदृशादृष्टिचिंताद्याः स्मृतिजीवस्य बोधकाः पत्रे वाहने बिभ्यति भयं गते सति अथ च मीलति मृते सति जितं जितं जितमिति कंससंबंधी व्यालोलश्चंचलः कोलाहलः अभूत् जातः कंसो बालेन जितः इति सर्वैर्जनैः कलकलशब्दः कृतइत्यर्थः वचनकौशलेन मानिनीमानदानात् चतुरः चतुर्भुजः कृष्णो यत्र ॥ ७॥

अथ एकादशः सर्गः प्रारभ्यते॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

श्लोक॥ रुचिरमनुनयेन प्रीणयित्वा मृगाक्षीं गतवति कृतवेषे केशवे कुंजशय्यां॥ रचितरुचिरभूषां दृष्टिमोषे प्रदोषे स्फुरति निरवसादां कापि राधां जगाद१

अधुनाराधांप्रतितत्सखीब्रूते रुचिरमिति कापिसखी प्रदोषेरजनीमुखे स्फुरति दीप्यमानेसति प्राप्तेइत्यर्थः राधांजगाद वक्ष्यमाणमितिशेषः कस्मिन्सति केशवेकृष्णेअनुनयेनप्रीतिवचनेनरुचिरंबहुकालंमृगाक्षींराधांप्रीणयित्वासंतोषयित्वाकुंजशय्यांलतागृहशयनंगतवतिसति कीदृशेकेशवे कृतवेषेकृतशृंगारालंकारेराधायाइतिकीदृशींराधां रचिताकृतारुचिरामनोहराभूषालंकारोययाकृष्णस्येति अन्योन्यालंकारकरणेनान्योन्यरागः सूचितः. कीदृशेप्रदोषे अंधकाराधिक्येनदृष्टिंमुष्णातीतिदर्शनचोरकेपुनः कीदृशींराधांनिरवसादांनिर्गतःमानसभंगरूपोऽवसादःउपतापोयस्यास्तां॥१॥

अथ विंशः प्रबंधो वसंतरागेण रूपकताले गीयते.

विरचितचाटुवचनरचनं चरणरचितप्रणिपातं॥ संप्रति मंजुलवंजुलसीमनि केलिशयनमनुयातम्॥१॥ मुग्धे मधुमथनमनुगतमनुसर राधिके॥ ध्रु०॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

वसंतरागः उक्तार्थंगीतेनाह विरचितेति हेराधिकेमुग्धे मूढे अनुगतं अनुकूलं मधुमथनंकृष्णं अनुसर अनुगच्छ विरचिताउक्तउक्ताचाटु प्रियावचनरचनापरंपरायेनतंपुनः कीदृशं चरणेपादेरचितः कृतः प्रणिपातः प्रणामोयेनतं तस्मानमंगाय पुनः कीदृशं संप्रतिइदानींमंजुलोमनोहरोऽशोकोवेतसोवातस्यसीमनिपर्यंतेतटेकेलिशयनंस्मरतार्थंशय्यांअनुयातंप्राप्तमित्यर्थः अतस्त्वयाशीघ्रंगंतव्यमिति॥१॥

घनजघनस्तनभारभरे दरमंथरचरणविहारं॥ मुखरितमणिमंजीरमुपैहि विधेहि मरालविकारम्॥२॥

तांप्रोत्साहयंतीत्वरयति घनेति घनयोर्मांसलयोर्जघनस्तनयोर्भारस्यभरोभाराधिक्यंयस्यास्तत्संबोधनं दरमंथरईषन्मंदश्चरणविहारः पादक्रमो यस्यांक्रियायां मुखरितः शब्दितः मणिमंजीरोमणिसहितमंजीरोयस्यांक्रियायांतंकृष्णमुपैहिउपगच्छ अतएवमरालानांराजहंसानांविकारं विलासंविधेहि कुरु ॥२॥

शृणु रमणीयतरं तरुणीजनमोहनमधुरिपुरावं॥ कुसुमशरासनशासनबंदिनि पिकनिकरे भज भावं॥३॥

अन्यमप्युद्दीपनविभावंवर्णयति शृण्विति त्वंरमणीयतरंअतिमनोहरंश्राव्यंतरुणीजनानांमोहनंमधुरिपोःकृष्ण

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

स्वरावंवंशशब्दंशृण्वाकर्णय मधुपविरावमितिपाठेभ्रमरशब्दं किंचपिकनिकरेकोकिलसमूहे कुसुमान्येवशरासनंधनुर्यस्य तादृशः कामस्तदाज्ञातयाबंदिनिस्तावकेसति भावंकृष्णोऽनु रागंभजआश्रय हेमानिन्यः मानंत्यक्तायूयंभजनंकुरुतेति कोकिलाः घोषयंतीत्यर्थः ॥३॥

अनिलतरलकिसलयनिकरेण करेण लतानिकुरंबं॥ प्रेरणमिव करभोरु करोति गतिं प्रतिमुंच विलंबम्॥४॥

अनिलेति हेकरभोरुकनिष्ठांतोमणिबंधपर्यंतंकरस्यबहिर्भागस्तद्वद्रूजंघाद्वयंयस्यास्तत्संबोधनं गतिंगमनंप्रति विलंबंमुंचशीघ्रंगच्छेतियावत् यतः लतानिकुरंबंलतासमूहं अनिलेनतरलश्चंचलोयः किसलयनिकरः पल्लवसमूहस्तद्रूपेणाकरेणहस्तेनतवप्रेरणमिवज्ञापनमिवकरोति अचेतनालतापित्वांप्रेरयति किंपुनरहं॥४॥

स्फुरितमनंगतरंगवशादिव सूचितहरिपरिरंभं॥ पृच्छ मनोहर हारविमलजलधारमसुं कुचकुंभं॥५॥

अपिच स्फुरितमिति हेराधे त्वंअमुंकुचकुंभंस्तनद्वयं पृच्छ सम्यगतिवर्तुलत्वात्काठिन्यत्वाच्चकुंभसाम्यंकीदृशंकुचकुंभं अनंगस्यकामस्ययेतरंगाविकारास्तद्वशादिवस्फुरितंसकंपं अतएवसूचितः हरेःपरिरंभः आलिंगनंयेन अ-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

न्योपिकलशोनयांतरंगैः प्रेर्य्यमाणः सकंपोभवति इवशब्दो त्प्रेक्षकाद्योतकः पुनः कीदृशं मनोहरोयहारः सएवविम लानिर्मलाजलधारायत्र ॥ ५ ॥

अधिगतमखिलसखीभिरिदं तव वपु-
रपि रतिरणसज्जं ॥ चंडि रसितरशना
रवडिंडिममभिसर सरसमलज्जम् ॥ ६ ॥

अधिगतमिति हेचंडिअत्यंतकोपने इत्याक्षेपेसंबोध नं अखिलसखीभिरपितवेदंवपुः शरीरंरतिरणेस्मरतसंग्रामे सज्जंसन्नद्धं अधिगतंज्ञातंतवमनसि अभिमानोनास्तीत्य र्थः एवंसतिरसिताशब्दितारशनाक्षुद्रघंटिकासेवआरवडिं डिमोवाद्यविशेषोयस्यांक्रियायांसरसंसोत्कंठंयथास्यात्त था अलज्जंलज्जारहितंयथास्यात्तथाऽभिसरकृष्णमि त्यध्याहारः ॥ ६ ॥

स्मरशरसुभगनखेन सखीमवलंब्य
करेण सलीलं ॥ चल वलयक्वणितैरव
बोधय हरिमपि निजगतिशीलं ॥ ७ ॥

स्मरेति हेराधे त्वंकरेणहस्तेनसखीं अवलंब्यसलीलंस विलासंयथास्यात्तथाचलगच्छ कीदृशेनकरेण स्मरशरव त्कामबाणवत्सुभगानिसुंदराणिनखानियस्मिन्‌रणेशस्त्रा णिभवंति रतिरणेतुत्वन्नखान्येवस्मरस्यशस्त्राणीतिभावः गत्वाचवलयक्वणितैः कंकणशब्दैः हरिंकृष्णंअवबोधय

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

अहमागतेतिज्ञापयेत्यर्थः अपिक्रियासमुच्चयेकथंभूतंहरिं निजेआत्मनिगतिर्यस्यसनिजगतिः कामस्तस्मिन्नूशीलंसमाधिश्चित्तैकाग्र्यंयस्य कामपरवशमित्यर्थः ॥७॥

श्रीजयदेवभणितमधरीकृतहारमुदासितवामं ॥ हरिविनिहितमनसामधितिष्ठतु कंठतटीमविरामम् ॥८॥ इति श्रीगीतगोविंदे विंशतिमः प्रबंधः

श्रीजयदेवेति श्रीजयदेवेनभणितंगीतंहरौकृष्णोविनिहितमारोपितंमनश्चित्तंयैस्तेषांभक्तानांकंठतटीं अविरामंसर्वदा अधितिष्ठतु कंठदेशेवसत्वित्यर्थः अधिशीङ्स्थासांकर्मकीदृशंभणितं अधरीकृतः स्वगुणेर्हीनः कृतः मुक्ताहारोयेनपुनः कीदृशं उदासितास्वगुणैस्तिरस्कृतावामास्कंदरीयेन यद्यपिहारस्यरमणीचकंठदेशास्थितस्ययाशोभातत्प्रदत्वंसंभवतितथापितयोरागिणामेवशोभाप्रदत्वं नतुमुमुक्षूणां तत्रापि तारुण्यएवनतुसर्वदाजयदेवभणितंतुकृष्णकथात्वेन हारापेक्षयाचाधिकमित्यर्थः ॥८॥

श्लोक ॥ सा मां द्रक्ष्यति वक्ष्यति प्रियकथां प्रत्यंगमालिंगनैः प्रीतिं यास्यति रंस्यते सखि समागत्येति चिंताकुलः ॥ स त्वां पश्यति वेपते पुलकयत्यानंदति स्विद्यति प्रत्युद्गच्छति मूर्च्छति स्थिरतमः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

पुंजे निकुंजे प्रियः ॥१॥

इदानींसखीकृष्णस्यस्नेहातिशयमाह सामामिति हेराधे सप्रियःकृष्णःस्थिरेनिश्चलेतमःपुंजेअंधकारसमूहे अन्यत्र तस्मिन्निकुंजेलतागृहेत्वांपश्यति ध्यानेनदृष्ट्वापिकिमियं परुषंमधुरंवदिष्यतीतिभयात् वेपतेकंपतेपुलकयतिअंगा- नीत्यर्थात् ध्यानेनैवतदालिंगनंपरिकल्प्यसरोमांचोभव तीत्यर्थः ध्यानेनत्वत्करतकेलिंपरिकल्प्यस्विद्यति पश्चा त्केलिंकृत्वाउत्थायगंतुंप्रवृत्तायांत्वयिप्रत्युद्गच्छतिप्रत्युत्था नंकरोतिततःध्यानविच्छेदेत्वामदृष्ट्वामूर्च्छति कीदृशःप्रियः चिंताकुलः चिंतायुक्तः इतीतिकिंहेसखिसाराधामांद्रक्ष्यति अ नुकूलतयाईक्षते दृष्ट्वाचप्रियकथांमनोहरांकथांवक्ष्यतिवदि ष्यतिउक्त्वाप्रत्यंगंप्रतिअवयवंप्रतिआलिंगनैःप्रीतिंसंतोषं यास्यतिप्राप्स्यतिसमागम्यमिलित्वारंस्यते मयासहक्रीडि ष्यति इतिप्रश्नेसमागम्येतिपूर्वार्द्धेसर्वत्रयोज्यं दीपकालंका रः शार्दूलविक्रीडितंवृत्तम् ॥१॥

श्लोक॥ अक्ष्णोर्निक्षिपदंजनं श्रवणयो स्तापिच्छगुच्छावलिं मूर्ध्नि श्यामसरोज दामकुचयोः कस्तूरिकापत्रकम्॥ धूता- नामभिसारसत्वरहृदां विष्वक् निकुंजे सखि ध्वांतं नीलनिचोलचारुसुदृशां प्रत्यंगमालिंगति॥२॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

गमनकालयोग्यंअंधकारंवर्णयति अक्ष्णोरिति हेसखि राधे ध्वांतंअंधकारः स्फुटशांनायिकानांप्रत्यंगंप्रत्यवयवंआ लिंगतिआश्लिष्यति किंकुर्वत् अक्ष्णोर्नेत्रयोरंजनंकज्ज लंनिक्षिपत्विन्यस्यत् श्रवणयोः कर्णयोः तापिच्छगुच्छा वलिंतमालपुष्पस्तबककर्णपूरपंक्तिंनिक्षिपत् कुचयोःस्तन योः कस्तूरिकापत्रकंमृगमदपत्रावलींनिक्षिपत् मस्तकेश्याम सरोजदामनीलकमलमालांनिक्षिपत् कीदृशीनांस्फुटशांधू र्तानांपरिवंचकानांपुनः कीदृशीनां विष्वक्सर्वत्रनिकुंजेल तागृहे अभिसाररसत्वरंगमनायसाहसंहृतूयासांतास्तासां कीदृशंध्वांतं नीलनिचोलवत् श्यामवस्त्रवत्चारुसदृशमि त्यर्थः नीलवस्त्रस्थाने ध्वांतंजातमित्यर्थः अतोभूषणादि निर्माणेनापिकालातिक्रमोनयुक्तइतिभावः॥२॥

श्लोक॥ काश्मीरगौरवपुषामभिसारिका
णामाबद्धरेखमभितो मणिमंजरीभिः॥
एतत्तमालदलनीलतमं तमिस्रं तत्प्रेमहे
मनिकषोपलतां तनोति॥३॥

अंधकारमेववर्णयति काश्मीरेति हेराधेएतत्तमिस्रंअं- धकारः तत्प्रेमतासामभिसारिकाणांयत्प्रेमप्रीतिस्तदेवहेमसु वर्णंतस्यनिकषोपलतांघर्षणपाषाणतांतनोतिविस्तारयति कीदृशंतमिस्रंकाश्मीरंकुंकुमंतद्वद्गौरंपीतंवपुर्यासांतासाम- भिसारिकाणांस्त्रीणांमणिमंजरीभिःमणिकिरणैःअभितः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

सर्वतः आबद्धा कृतरेखायस्मिन् तमालदलंनूतनपत्रंतद्वन्नीलतमं अतिश्यामं कांतार्थिनीतुयायातिसंकेतंसाभिसारिकेत्यमरः इत्यभिसारिकालक्षणं अभिसारिकाणांप्रेमपरीक्षासमयस्त्वयमेव यदंधतमसिगमनमिति ३

श्लोक ॥ हारावलीतरलकांचनकांचिदाम केयूरकंकणमणिद्युतिदीपितस्य ॥ द्वारे निकुंजनिलयस्य हरिं निरीक्ष्य व्रीडावतीमथ सखी निजगाद राधां ॥ ४ ॥

हारावलीति अथानंतरंसखीराधांनिजगाद पुनरपि उवाच कथंभूतांराधां निकुंजनिलयस्यलतागृहमेवनिलयंनिभृतगृहंतस्यद्वारेहरिंकृष्णंनिरीक्ष्यदृष्ट्वाव्रीडावतींसलज्जां अस्मिन्मयाकतिनिष्ठुराणिवचांसिउक्तानिसंप्रतितत्समक्षंकथंयामीतिलज्जा कीदृशस्यनिलयस्य मुक्ताहारमध्यद्युमणेः द्युत्याकांचनकांचीदाम्नः स्वर्णकांचीरशनायाः द्युत्याकेयूरस्य बाहुभूषणस्यचद्युत्याएतेषुखचितायेमणयस्तेषांद्युत्यादीपितस्य प्रकाशितस्यएतेनध्वांतेपिदर्शनयोग्यताउक्ता ॥ ४ ॥

अथ एकविंशतिमः प्रबंधो वराडिरागेण आडवताले गीयते.

मंजुतरकुंजतलकेलिसदने ॥ प्रविश राधे माधवसमीपमिह विलस ॥ रतिरभसहसितवदने ॥ १ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

तदेवगीतेनाह वरांडिरागे मंजुतरेति हेराधेरतिरभसेन स्मरतोत्साहेनहसितंहास्ययुक्तंवदनंमुखंयस्यास्तत्संबोधनं इहअस्मिन्मंजुतरं मनोहरंनिकुंजाभ्यंतरदेशस्तदेवकेलिसदनंक्रीडागृहंतस्मिन् माधवसमीपंप्रविशगच्छपश्चाद्विलसक्रीडांकुरु ॥१॥

नवभवदशोकदलशयनसारे ॥प्र०॥ कुचकलशतरलहारे ॥२॥

अपिच नवेति हेकुचकलशयोश्चंचलहारोमुक्ताहारोयस्यास्तत्संबोधनंहेराधे इहक्रीडागृहेमाधवसमीपंप्रविशविलस च कीदृशेइह नवानिनूतनानिभवंतियानिअशोकदलानिपर्णानितत्कृताशाय्याकृष्णशय्यातदेवसारोमहाधनंयस्मिन्॥२॥

कुसुमचयरचितशुचिवासगेहे ॥प्र०॥ कुसुमसुकुमारदेहे ॥३॥

कुसुमेति हेकुसुमवत्सुकुमारोदेहोयस्यास्तत्संबोधनं कीदृशेइह कुसुमचयेनपुष्पसमूहेनरचितंकृतंशुचिअनुपहतंनायिकांतरेणानुपभुक्तंयद्वासगृहंतत्रविलस॥ ३॥

मृदुचलमलयपवनसुरभिशीते ॥प्र०॥ रसवलितललितगीते ॥४॥

मृदुचलेति हेरसवलितंकृतंललितंमनोहरंगीतंयया तत्संबुद्धिः हेराधे इहकोकिलसदनेविलसकीदृशेइह चलश्चंचलोयोमलयपवनस्तेनसंपर्कवशात्सुरभिएवंभूतंसत्शीतलंत

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

स्मिन् ॥ ४ ॥

वितत बहुवल्लिनवपल्लवघने ॥ प्र० ॥ चिर मिलितपीनजघने ॥ ५ ॥

विततेति हेचिरमिलितेबहुकाले अन्योन्यसंबद्धेपीने मांसले जघनेयस्यास्तत्संबुद्धिः हेराधेइहविलस कीदृशेइह वितताइतस्ततोवीशीर्णाबहुवल्लयः वल्यस्तासांनवपल्लवास्तै र्घनेनिबिडे शयनेइत्यध्याहारः निबिडशयनइत्यर्थः ॥ ५ ॥

मधुमिलितमधुपकुलकलितरावे ॥ प्र० ॥ मदनरभसरसभावे ॥ ६ ॥

मध्विति हेमदनरभसः कामरभसः शृंगारभावोऽभि प्रायोयस्यास्तत्संबुद्धिः कीदृशेइह मधुनिपुष्परसेमिलिता नितत्पानार्थमित्यर्थः यानिमधुपकुलानिभ्रमरसमूहास्तैः कलितः कृतोरावः शब्दोयस्मिन् ॥ ६ ॥

मधुतरलपिकनिकरनिनदमुखरे ॥ प्र० ॥ दशनरुचिरुचिरशिखरे ॥ ७ ॥

मधुतरलेति हेदशनरुचिरे तवदंतदीप्तिरेव रुचिरंशि खरंमाणिक्यविशेषोयस्यास्तत्संबुद्धिः कीदृशेइहमधुना वसंतेनतरलश्चंचलः पिकनिकरोकोकिलसमूहस्तस्य- निनदेनशब्देनंमुखरेशब्दायिते पक्कदाडिमबीजाभंमा णिक्यंशिखरविदुः इतिशाश्वतः ॥ ७ ॥

विहितपद्मावतीसुखसमाजे ॥ कुरु मु

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

शरे मंगलशतानि भणति जयदेवकविरा जराजे ॥८॥ इति श्रीगीतगोविंदे एकविंशतिमः प्रबंधः ॥२१॥

विहितेति हेसुशरेकृष्णात्वंजयदेवकविराजेमंगलशता निकुरु कीदृशेजयदेवकविराजे विहितःकृतःपद्मावत्याः स्वस्त्रियःसुखसमाजःशुभसमूहोयस्मिन् एतेनस्वनायिकायामेवप्रेमातिशयोदर्शितः नत्वन्यस्यांपुनःकीदृशे भणतिचगुणान्वदति क्वचित्प्रविशराधेमाधवसमीपभणितेतिपाठः ॥८॥

श्लोक ॥ त्वां चित्तेन चिरं वहन्नयमतिश्रांतो भृशं तापितः कंदर्पेण च पातुमिच्छति सुधासंबाधबिंबाधरं ॥ अस्यांकं तदलंकुरु क्षणमिह भ्रूक्षेपलक्ष्मीलवक्रीते दास इवोपसेवितपदांभोजे कुतः संभ्रमः ॥१

त्वामिति हेराधे अयंकृष्णास्तवसुधयामृतेनसंबाधंगहनं बिंबाधरंपातुमिच्छति कीदृशः कृष्णः यतःचित्तेनमनसात्वांचिरंवहन्अतिश्रांतःयतःकंदर्पेणभृशंतापितःअन्योपिभारवाहीसूर्यतापितश्च जलानिपातुंइच्छति तद्वदित्यर्थः तत्तस्मादस्यकृष्णस्यांकंक्रोडंक्षणंमुहूर्तमात्रंअलंकुरुभूषय तत्समीपंगंतुंबिभेमीत्यतआह इहकृष्णेसंभ्रमःभयंकुतः कीदृशेइह दासइवसेवकइवस्थिते पुनःकी

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

दृशोर्भ्रूक्षेपः कटाक्षक्षेपः सएवलक्ष्मीः संपत्द्रव्यंतेननव क्रीतेनूतनः क्रीतोदासोऽतिभीतोभवतीतिभावः अतए वउपसेवितंपदांभोजंचरणकमलंयेन॥१॥

श्लोक॥ सा ससाध्वससानंदं गोविंदे लोललोचना॥ सिंजाना मंजुमंजीरं प्रविवेश निवेशनम्॥२॥

सेति साराधानिवेशनं लतागृहंप्रविवेश सखीवचनात् कीदृशीराधा ससाध्वसंविदग्धः कृष्णः कथंमयारंजनीयइति सानंदंसहर्षंचइति नैकट्यात् गोविंदे कृष्णेलोलेलोचनेयस्याः सलज्जत्वात् पुनः कीदृशी मनोहरशब्दयुक्तंमंजीरंनूपुरंसिंजानागमनवशात्सशब्दंकुर्वतीक्वचित्ससाध्वससानंदगोविंदेइतिपाठः तदाससाध्वसः पूर्वापराधात्सानंदः राधायाः आगमनात् एवंनागरयोःसमागमेरसोऽसत्तिरुक्ता॥२॥

अथ द्वाविंशतिमः प्रबंधो वराडिरागेण रूपकताले गीयते.

राधावदनविलोकनविकासितविविधविकारविभंगं॥ जलनिधिमिव विधुमंडलदर्शनतरलिततुंगतरंगं॥१॥ हरिमेकरसं चिरमभिलषितविलासं॥ सा ददर्श गुरुहर्षवशंवदवदनमनंगनिवासं॥ध्रु०॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

लीलागृहप्रवेशं निरूप्येदानींदर्शनमहोत्सवेनरसविक्रियांगीतेनाह वराडीराग: रूपकताल: साशधाएवंभूतंहरिंददर्श सप्तपद्यांसर्वाणिहरिविशेषणानि कीदृशंहरिं राधावदनविलोकनेनविकासित: प्रकाशित: विविध: नानाप्रकार: विभाग: विभंगोकटाक्षादिरचनायेनतं पुन: कीदृशं जलनिधिंसमुद्रमिवस्थितं कीदृशंजलनिधिं विधुमंडलदर्शनेन चंद्रमंडलालोकेन तरलिताश्चंचलीकृता: तरंगा: कल्लोलायस्य तं पुन: कीदृशं एकरसं एकस्यांराधायामेवरस: प्रीतिर्यस्यतं पुन: कीदृशं चिरं बहुकालं अभिलषित: प्रार्थित: विलास: केलिर्येनतं पुन: कीदृशं गुरुहर्षस्यातिशयस्य हर्षस्यवशंवदं अधीनंवदनंमुखंयस्य सानंदमुखमित्यर्थ: पुन: कीदृशं अनंगस्यकामस्यनिवासंस्थानभूतं कंदर्पकोटिलावण्यमित्यर्थ: अत्रागाधशृंगाररसाश्रयत्वेनकृष्णस्यजलनिधिसाम्यं राधामुखस्याल्हादकारित्वादिनाचंद्रसाम्यंबोध्यं उपमालंकारश्च ॥१॥

हारममलतरतारमुरसिदधतं परिलंबित
दूरं॥ स्फुटतरफेनकदंबकरंबितमिव यमु
नाजलपूरम्॥ २॥

हारमिति पुन: कीदृशं हारंमुक्ताहारंदधतं धारयंतंउरसि हृदये कीदृशंहारं अमलतरतारंअत्यंतविशदबृहत्तरंपुन: कीदृशं स्फुटतरोयोफेनकदंबस्तेनकरंबितंमिश्रितंयमु

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

नाजलपूरमिवश्रीकृष्णास्यश्यामत्वाद्यमुनाप्रवाहसाम्यं हारशुभ्रत्वात् फेनसाम्यंबोध्यम्॥ २॥

श्यामलमृदुलकलेवरमंडनमधिगतगौर
दुकूलं॥नीलनलिनमिव पीतपरागपटल
भरवलयितमूलम्॥ ३॥

श्यामलेति श्यामलंकृष्णांमृदुलंकोमलंकलेवरमंडनं शरीरालंकारोयस्यतं पुनः कीदृशं अधिगतंपरिहितंगौर दुकूलंपीतवस्त्रंयेन कमिव नीलोत्पलमिवेत्यर्थः कीदृशं नीलनलिनं पीनपरागाणांकुंकुमरेणूनांपटलस्यसमूह स्यभरः अतिशायस्तेनवलयितंवेष्टितंमूलंयस्यतत्तथा॥३

तरलदृगंचलचलनमनोहरवदनजनित
रतिरागं॥स्फुटकमलोदरखेलितखंजन
युगमिव शरदि तडागं॥ ४॥

तरलेति कीदृशंहरिं तरलश्चंचलोयोकटाक्षस्तस्यच लनेनमनोहरंसुंदरंयद्वदनंतेनजनितउत्पादितोरसोरागोऽ भिलाषोऽर्थात्नारीणांयेन नारीणामतिकामकरमिति भावः कमिव शरदिशरत्कालेतडागमिव कीदृशतडागंस्फु टकमलस्यविकाशितपद्मस्योदरमध्येखेलितंक्रीडितंखं जनयोर्युग्मंयुगलंयत्रतथा शरत्कालेखंजनवर्णनमुचि तमेव॥ ४॥

वदनकमलपरिशीलनमीलितमिहिर

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

समकुंडलशोभं ॥ स्मितरुचिरुचिरसमुल्ल
सिताधरपल्लवकृतरतिलोभम् ॥ ५ ॥

वदनेति वदनकमलस्य परिशीलनाय मिलिते मिहिरसमे सूर्यतुल्ये ये कुंडले ताभ्यां शोभा यस्य तं तथा पुनः कीदृशं स्मितरुचिरो हास्यदीप्तिस्फुरंगः समुज्ज्वलितदीप्यमानो योऽधरपल्लवस्तेन कृतो रतौ लोभो युवतीनां रताभिलाषो येन तं तथा लत्सक्षेत्वयि रतिलोभमित्यत्र गमकत्वात्समासः ॥ ५ ॥

शशिकिरणच्छुरितोदरजलधरसुंदरकुसु
मसुकेशं ॥ तिमिरोदितविधुमंडलनिर्मलम
लयजतिलकनिवेशम् ॥ ६ ॥

शशिकिरणेति कीदृशं हरिं शशिकिरणेन चंद्रदीप्त्याच्छुरितं मंडितं सुंदरमभ्यंतरं यस्य जलधरस्य मेघस्य तद्वत्सुंदराः पुष्पसहिताः केशाः यस्य तं अत्र केशानां श्यामतया मेघसाम्यं तत्रस्थकुसुमानां च मेघांतश्चारिचंद्रकिरणसाम्यं बोध्यं पुनः कीदृशः तिमिरेंधकारे उदित उत्थितो यो विधुमंडलश्चंद्रबिंबस्तद्वन्निर्मलं मलयजतिलकं चंदनबिंदुस्तस्य निवेशो वस्थानं यत्र तं शृंगारिणां नागराणां तिलकं वर्तुलमेवेति तस्य चंद्रसाम्यं चंद्रोदये तिमिरस्यासंभवादभूतोपमेयं बोध्या ॥ ६ ॥

विपुलपुलकभरदंतुरितं रतिकेलिकलाभि
रधीरं ॥ मणिगणकिरणसमूहसमुज्ज्वलभू
षणसुभगशरीरं ॥ ७ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

विपुलेति कीदृशंहरिं विपुलोधिकोयः पुलकभरोरोमांचातिशयस्तेनदंतुरितंनिम्नोन्नतंव्याप्तमित्यर्थः पुनः कीदृशं रतिकेलिकलाभिः स्मरतक्रीडाकथाभिरधीरंचंचलंपुनःकीदृशं मणिगणानांकिरणसमूहेनसमुज्ज्वलंदीप्यमानंयद्भूषणंतेनस्रुभगंस्रुंदरंशरीरंयस्यतंतथा॥७॥

श्रीजयदेवभणितविभावद्विगुणीकृतभूषणभारं॥ प्रणमत हृदि विनिधाय हरिं भवजलस्रुकृतोदयसारं॥८॥

श्रीजयदेवेति श्रीजयदेवस्यभणितविभावेनभाषितप्रपंचेन द्विगुणीकृतस्यालंकारस्यभारोयस्यतंहरिं हेकृष्णाभक्ताःप्रणमतनमस्कुरुत किं कृत्वास्रुचिरंचिरकालंहृदिविनिधायस्थाप्य कथंभूतंहरिं स्रुकृतस्ययोउदयस्तस्यसारं यद्वास्रुकृतोदयएवसारोधनंयस्मात्तं॥८॥

श्लोक ॥अतिक्रम्यापांगं श्रवणपथपर्यंतगमनप्रयासेनेवाक्ष्णोस्तरलतरतारं पतितयोः॥ इदानीं राधायाः प्रियतमसमालोकसमये पपात स्वेदांबुप्रसर इव हर्षाश्रुनिकरः ॥१॥

एवंभूतस्यकृष्णस्यदर्शनाद्राधायास्तदानींकिंजातमितिहरिराह अतिक्रम्येति इदानींप्रियतमसमालोकसमये प्रवाहसदृशः राधायाः हर्षाश्रुनिकरःसात्विकभावेननेत्रांबुपूरः पपातनत्रोत्प्रेक्षते अपांगंनेत्रप्रांतंअतिक्रम्योल्लंघ्यश्रवणप

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

थस्यकर्णमार्गस्यपर्यंतगमनंयेन तेनयः अपातस्तेनैवाक्ष्णोः स्वेदांबुप्रसरोभूत् कीदृशायोरक्ष्णोः तरलतरतारंचंचलाक्ष कनीनिकंयथास्यात्तथापतितयोः अन्यस्यापिगमनेनश्रमोभवतितेनचपततितद्वत् ॥१॥

श्लोक ॥ भजंत्यास्तल्पांतं कृतकपटकं डूतिपिहिते स्मिते याते गेहाद्बहिरवहिताली परिजने ॥ प्रियास्यं पश्यंत्याः स्मरशरवशाकूतसुभगं सलज्जाया लज्जा व्यगमदिव दूरं मृगदृशः ॥२॥

भजंत्याइति मृगदृशः मृगाक्ष्याः राधायाः लज्जापिदूरंव्यगमदिवगतेव कीदृश्याः राधायाः अवहितः सावधानो यआलीपरिजनः सखीसेवकवर्गस्तस्मिन् गेहाद्बहिर्यातेगते सतितल्पांतंशय्यापर्यंतंभजंत्याः प्राप्नुवत्याः कीदृशेपरिजने कृताकपटेन कर्णादिकंडूतिः कंडूयनंतेनपिहितंछादितंहास्यंयेन पुनःकीदृश्याः प्रियास्यंकृष्णमुखंपश्यंत्याः कीदृशं प्रियास्यंस्मरशरवशंकामबाणाधीनं आकूतंस्मरताभिप्रायस्तेनसुभगंमनोहरं कामविकारहावभावादिमनोहरमित्यर्थः पुनः कीदृश्याः सलज्जायाः लज्जासहितायाः तस्याश्चेष्टंदृष्ट्वावचनांतरेणअपृष्ट्वाबहिर्गमनात्सर्वानांसाम्यं सर्वाःसख्योगनाः इतिकथमत्रस्यातव्यमिति लज्जापिगतेतिभावः ॥२॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

श्लोकः॥ जयश्रीविन्यस्तैर्महित इव मंदारकुसुमैः स्वयं सिंदूरेण द्विपरणमुदामुद्रित इव॥ भुजापीडक्रीडाहतकुवलयापीडकरिणः प्रकीर्णासृग्बिंदुर्जयति भुजदंडो मुरजितः॥३॥

इति श्रीकविराजश्रीजयदेवकृते गीतगोविंदे महाकाव्ये सानंदगोविंदो नामैकादशः सर्गः

जयेति मुरजितः कृष्णास्य भुजदंडो दंडाकारबाहुर्जयति सर्वोत्कर्षेण वर्तते भक्तानां रक्षणार्थमिति शेषः दंडशब्देन-आजानुबाहुत्वं द्योतितं कीदृशो भुजदंडः प्रकीर्णाः सर्वत्र लग्नाः असृग्बिंदवो रक्तबिंदवो यस्मिन् अतएव कुवलयापीडसंग्रामसंतोषेण स्वयं सिंदूरेण मुद्रित इव चित्रित इव द्विपश्चेत्सिंदूरेण मुद्रितस्तर्हि मदीयो बाहुरपि सिंदूरमुद्रितो भवतु पुनः कीदृश इव जयश्रिया जयलक्ष्म्या विन्यस्तैर्विक्षिप्तैः मंदारकुसुमैः पारिजातपुष्पैर्महित इव पूजित इव जयिनः शूरस्योपरि पुष्पवृष्टिरुचिता कीदृशस्य मुरजितः भुजापीडस्य बाहुदंडस्य क्रीडया हतः कुवलयापीडनामा करी हस्ती येन अनेन सामर्थ्य लक्षणो नायक गुण उक्तः एवंभूते भुजदंडे गाढालिंगनादिना श्रीराधायाः निःशंक क्रीडनं सूचितमिति भावः अ-त्रोत्प्रेक्षालंकारः सानंदो राधासमागमेन सौंदर्येतिक्षेपकः॥३॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

अथ द्वादशः सर्गः प्रारभ्यते.

श्लोक॥ गतवति सखीवृंदे मंदत्रपाभर निर्भरस्मरशरवशाकूतस्फीतस्मितस्नपिताधरां॥ सरसमनसं दृष्ट्वा राधां मुहुर्नवपल्लवप्रसवशयने विक्षिप्ताक्षीमुवाच हरिः प्रियाम्॥१॥

गतवतीति अथहरिः कृष्णः प्रियांवल्लभांराधांसरसमनसंरसोनुरागस्तत्सहितंमनोयस्यास्तांदृष्ट्वाउवाचवक्ष्यमाणमितिशेषः कस्मिन्सतिसखीवृंदेसखीसमूहेगतवतिसति कीदृशींराधां मंदोल्पोयोत्रपाभरोलज्जाभरस्तेननिर्भरोतिशयितोयःस्मरस्तस्यशरवशस्तदायत्तोआकूतोभिप्रायस्तेनस्फीतंप्रवृद्धंयत्स्मितमीषद्धसितंतेनस्नपितोव्याप्तावधरोयस्यास्तां अथमदक्रूरइतिस्मरविशेषणं पुनःकीदृशीं मुहुःपुनःपुनः नवपल्लवप्रसवशयनेनवपल्लवपुष्पमयेशयनेविक्षिप्ताक्षींनिहितनयनां शय्यालोकनेनस्मरतेच्छाध्वन्यते अस्मिन्सर्गेस्वाधीनभर्तृकानायिकावर्ण्यतेयस्यारतिगुणाकृष्टःपतिः पार्श्वंनमुंचति विचित्रविभ्रमासक्तासास्यात्स्वाधीनभर्तृका॥१॥

अथ त्रयोविंशतिमः प्रबंधो विभासरागेण एकतालीताले गीयते.

किसलयशयनतले कुरुकामिनि चरण

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

नलिनविनिवेशं ॥ तव पदपल्लववैरिपरा
भवमिदमनुभवतु स्रुवेशम् ॥१॥ क्षणमधु
ना नारायणमनुगतमनुसर भो राधिके
॥ ध्रुवप० ॥

किसलयेति विभासरागः तल्लक्षणं स्वच्छंदसंमानित पुष्पचापः प्रियाधरस्वादुसुखातितृप्तः पर्यंकमध्यास्य कृतो पवेशोभासोविपूर्वः किलहेमपौरइति हेराधे अधुना क्षणंअनुगतंआधीनंमांनारायणंअनुसर अनुगच्छ अनुसरणप्रकार माह. हेकामिनि हेकामुके त्वंकिसलयैरचितशयनेशय्यातले उपरिभागेचरणनलिनस्यविनिवेशंपादपद्मस्यार्पणंकुरु इदं-किसलयशयनं तवपदपल्लवेनवैरितस्मात्पराभवंतिरस्कारं-अनुभवतुप्राप्नोतु तवपदपल्लवस्यकांतिहरणात् शत्रुमस्तके हिचरणोदीयते कीदृशंइदं स्रुवेशमपिपत्रचरनादिनाऽलं कृतमपि ॥१॥

करकमलेन करोमि चरणमहमागमिता
सिविदूरं ॥ क्षणमुपकुरु शयनोपरि मामि
व नूपुरमनुगतिशूरं ॥२॥

हेराधे अहंकरकमलेन तेचरणंकरोमिसंवाहयामिधातूनामनेकार्थत्वात् यतस्त्वंविदूरंआगमितासिमयाआनी-तासि दूरागतस्यचरणसंवाहनमुचितं त्वंशयनोपरिक्षणंनूपुरंउपकुरु कमिव अनुगतिशूरंतवानुसरणेशूरंमामिव

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

यथाआलिंगनादिनामीमुपकरोषि तथानूपुरमपिशय्यातल मलंकुरु इतिभावः॥ २॥

वदनसुधानिधिगलितममृतमिव रचयव चनमनुकूलम्॥ विरहमिवापनयामि पयो धररोधकमुरसि दुकूलम्॥ ३॥

वदनेति त्वंअनुकूलंवचनंवाक्यंअमृतमिव रचयवद कीदृशं वदनमेवसुधानिधिश्चंद्रस्तस्माद्गलितमुत्पन्नं अनं तरं उरसिवक्षसिवर्तमानंदुकूलंपटवस्त्रंविरहमिव अपनया मिस्फोटयामीत्यर्थः कीदृशं पयोधररोधकंस्तनाच्छादकंवि रहपक्षेस्तनाश्लेषप्रतिबंधकम्॥ ३॥

प्रियपरिरंभणरभसवलितमिव पुलकि तमन्यदुरापं॥ मदुरसि कुचकलशं वि- निवेशय शोषय मनसिजतापम्॥ ४॥

कुटिलमवलोकयंतीमतिविह्वलः सन्नाह प्रियेति हेराधे त्वंमदुरसिममवक्षसिकुचकलशंविनिवेशयस्थापयस्तनकलशा र्पणेनमनसिजतापंकामपीडांशोषयखंडय कीदृशंप्रियपरिरं भणायममालिंगनायरभसोत्साहेनवलितमिवसंमुखमिव पुनः कीदृशंसंजातरोमांचं पुनः कीदृशंअति दुःखेनप्राप्यतेइ तिदुरापं सजलकुंभक्षेपेणतापशांतिर्युज्यतएव॥ ४॥

अधरसुधारसमुपनय भामिनि जीवय मृतमिव दासं॥ त्वयि विनिहितमनसं वि

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

रहानलदग्धवपुषमविलासम् ॥५॥

त्वदेकजीवनंमांत्वमेवजीवयेत्याह अधरेति हेभामिनि कामकुशले त्वंअधरस्तधारसंओष्ठामृतरसंउपनयदेहि अनेनदासंसेवकंमांमृतमिवजीवय कीदृशंत्वयिविनिहितमनसंदत्तमानसंपुनःकीदृशं विरहानलेनवियोगाग्निनादग्धं वपुः शरीरंयस्य अतएवविलासंनिश्चलंमृतस्तनिश्चलोभवति ॥५॥

शशिमुखि मुखरय मणिरसनागुणमनुगुणकंठनिदानं ॥ ममश्रुतियुगुले पिकरववविकले शमय चिरादवसादं ॥६॥

चाटुकेनप्रसन्नांप्रत्याह शशीति हेशशिमुखिचंद्रवदने त्वंमणिरसनागुणंमणियुक्तंकांचीदाममुखरयवादितंकारय कीदृशं अनुगुणःसदृशःकंठनिनादोयस्यकंठगीतनादसदृशमित्यर्थः तेनशब्देनत्वंममश्रुतियुगुलेकर्णयुग्मेचिरात्तवविरहेणयोवसादः खेदस्तंशमयनाशय खेदकारणमाह कीदृशेश्रुतियुगुले पिकरुतैःकोकिलशब्दैर्विकलेदुःखिते विरहिणोहिपिकरुतंदुःसहंभवति ॥६॥

मामतिविफलरुषा विफलीकृतमवलोकितुमधुनेदं ॥ मीलति लज्जितमिव नयनं तव विरम विसृज रतिखेदं ॥७॥

किंचिदवलोकयंतीमाह मामिति हेराधेतवेदंनेत्रं

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

नयनंअधुनामामवलोकितुंद्रष्टुंलज्जितमिवमीलितमिवधत्से कीदृशंमां अतिविफलरुषाअतिविफलकोपेनविफलीकृतंदुःखितं नयनविशेषणंवा विकलीकृतंकर्णांतरंप्रापितं अतएवरोषाद्विरमविरक्ताभव रतिखेदंक्रीडादैन्यंविसृज त्यज कोपंस्त्वामयासहरमणंकुर्वित्यर्थः ॥७॥

श्रीजयदेवकवेरिदमनुपदनिगदितमधुरिपुमोदम् ॥ जनयतु रसिकजनेषु मनोरमरतिरसभावविनोदम् ॥८॥ इति श्रीगीतगोविंदे त्रयोविंशतिमः प्रबंधः ॥

श्रीति श्रीजयदेवेनभणितमिदंगीतंरसिकजनेषुशृंगाररसलोकेषुमनोरमंमनःप्रीतिकरं रतिःसंभोगःरसः शृंगाररसःभावाः संचारिसात्त्विकादयस्तेतेषांविनोदंकौतुकं जनयतुउत्पादयतु कीदृशमिदं अनुपदंपदेपदेनिगदितो उक्तोमधुरिपोः कृष्णस्यमोदो हर्षोयत्रगीते ॥८॥

श्लोक ॥ प्रत्यूहः पुलकांकुरेण निबिडाश्लेषे निमेषेण च क्रीडाकूतविलोकिते धरसुधापाने कथाकेलिभिः ॥ आनंदाधिगमेन मन्मथकलायुद्धेपि यस्मिन्नभूदुद्भूतः सतयोर्बभूव सुरतारंभः प्रियं भावुकः ।

इदानींसुरतारंभंनिरूपयति प्रत्यूहइति तयोः राधाकृष्णयोःसःसुरतारंभः प्रियंभावुकः प्रियंभवितुंशीलंयस्यसः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

उद्भूतः प्रकटोबभूव सकः यस्मिन्स्मरतारंभेनिबिडाश्लेषेगा ढालिंगनेकर्तव्येपुलकांकुरेणरोमोद्गमेनप्रत्यूहः विघ्नोऽभूत् व्यवधानकर्तृत्वाद्रोमोद्गमस्य यस्मिन्स्मरतारंभे क्रीडाकूतविलोकिते क्रीडास्मअभिप्रायपूर्वकंयद्विलोकिनंतास्मिन्कर्तव्येनिमेषेणपक्ष्मचलनेनप्रत्यूहोऽभूत् यस्मिन्नधरस्मधापानेओष्ठामृतपानेकर्तव्येकथाकेलिभिः प्रत्यूहोभूत् अपिसमुच्चये यस्मिन्मन्मथकलायुद्धेकामकमलान्वितस्मरतसंग्रामेकर्तव्ये आनंदाधिगमेनआनंदप्राप्त्याप्रत्यूहोऽभूत्प्रीत्याआनंदप्राप्तिः ॥१॥

श्लोक ॥ दोर्भ्यां संयमितः पयोधरभरेणापीडितः पाणिजैर्विद्धो दशनैः क्षताधरपुटः श्रोणीतटेनाहतः ॥ हस्तेनानमितः कचेधरमधुस्यंदेन संमोहितः कांतः कामपि तृप्तिमापतदहो कामस्य वामा गतिः॥२

तदेवविपरीतारव्यंउक्तिवैचित्र्येणकथयति दोर्भ्यामिति कांतः कृष्णः कामपिअनिर्वचनीयांतृप्तिंसंतोषमापप्रापत् कीदृशः कृष्णः दोर्भ्यांहस्ताभ्यांसंयमितः बद्धः अर्थान्नायिकायाः पुनः कीदृशः पयोधरभरेणस्तनभरेणपीडितः पाणिजैर्नखैराविद्धः खंडितः दशनैर्दंतैः क्षतमधरपुटंयस्यसः पुनःकीदृशः श्रोणीतटेनकटिप्रदेशेनाहतस्ताडितः कचेकेशबंधेहस्तेनआनमितः नम्रीकृतः पुनःकीदृशः अधरमधुस्यंदेनअ

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

धरामृतरसेनमोहितः यत्क्रोधजनकं तदेवातिसंतोषकारक मन एव कामस्य मदनस्य वामाविपरीतैवगतिरित्यर्थः॥२॥

श्लोक ॥ मारांके रतिकेलिसंकुलरणारंभे तया साहसप्रायं कांतजयाय किंचिदुपरि प्रारंभि यत्संभ्रमात्॥ निष्पंदा जघनस्थली शिथिलिता दोर्वल्लिरुत्कंपितं वक्षो मीलितमक्षि पौरुषरसः स्त्रीणां कुतः सिध्यति॥ ३॥

तदेवपुनः कथयति मारांकेइति मारांके मारांकसंज्ञके रतिकेलिसंकुलरणारंभे स्मरतक्रीडातुमुलयुद्धारंभे तया राधया यत्संभ्रमात् कांतजयाय कृष्णाजयार्थं साहसप्रायं किंचिदुपरिविपरीतरतं प्रारंभि आरब्धं तदैव जघनस्थली निष्पंदा तदास्तब्धा जाता दोर्वल्लि भुजलताशिथिलाजाता वक्षस्थलमपिकंपयुक्तमभूत् तथाअक्षिनेत्रयुग्मंमीलितमभूत् अतएवस्त्रीभिरतिसाहसात्प्रारब्धमपिपौरुषं कुतःसिध्येन्नैवसिद्ध्यतीत्यर्थः॥३॥

श्लोक॥ तस्याः पाटलपाणिजांकितमुरो निद्राकषाये दृशौ निर्धूताधरशोणिमा विलुलितस्रस्तस्रजोमूर्धजाः॥ कांचीदाम दरश्लथांचलमिति प्रातर्निखातैर्दृशोरेभिः कामशरैस्तदद्भुतमहो पत्युर्मनः की

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

लितम् ॥ ४ ॥

तस्याइति एभिः पूर्वोक्तैः कामशरैर्यत्पत्युः स्वामिनोम नः कीलितं विद्धं एतदद्भुतमाश्चर्यमभूत् कथंभूतैःकामशरैः प्रातःकालेदृशोर्नेत्रयोर्निखातैरारोपितैः इतीतिकिंतस्यारा धायाउरः पाटलपाणिजैः श्वेतरक्तनखैश्चिन्हितं तस्यानिद्राक षायेनिद्रालोहितेदृशौनेत्रे तस्यानिर्धूतःक्षालितःअधरशोणि माअधरलौहित्यं तस्याविलुलितामालाः स्रस्ताःशिथिलि ताःस्रजोमालायेभ्यस्तेमूर्द्धजाःकेशाः दरः ईषत्श्लथंशि थिलंअंचलंवस्त्रंयस्यतादृशंकांचीदाममेखलागुणःकामश रैः नखक्षतजागरचुंबनकेशाकर्षणनीवीमोचनानिपंचश राःनिरूपिताः अन्यत्रनिखातैर्बाणैरन्यत्कीलितमित्याश्चर्य मित्यर्थः ॥४॥

श्लोक ॥ त्वामप्राप्यमपि स्वयंवरपरां क्षी
रोदतीरोदरे शंके सुंदरि कालकूटमपि ब
न्मूढो मृडानीपतिः ॥ इत्थं पूर्वकथाभिर
न्यमनसो विक्षिप्य वामांचलं राधायास्त
नकोरकोपरिलसन्नेत्रो हरिः पातुवः॥५॥

त्वामप्राप्येति हरिः कृष्णः वः युष्मान्पातु कीदृशोहरिः राधायाः स्तनौकोमलत्वपतितत्वादिनागुणेनकोरकाविवतयो रुपरिचलंतीसंबद्धेनेत्रेयस्य किंकृत्वावामांचलंहृदयवामदेश लग्नांचलंविक्षिप्यदूरीकृत्य कीदृश्याः राधायाः इत्थंइतिपूर्व

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

कथाभिः अन्यमनसः कथादत्तचित्तायाइत्यर्थः कथामेवा
ह हेस्कंदरिक्षीरोदतीरोदरे क्षीरसमुद्रतीरमध्ये मूडानीपतिर्म
हादेवस्त्वामप्राप्य कालकूटविषमपिबदित्यहंशंके तर्कयामि
यतः मूढः ज्ञानरहितः कीदृशींत्वां मथिमान्निमित्तंनिमित्ते
सप्तमी स्वयंवरपरांमदेकपतिकामामित्यर्थः इत्थंपूर्वकथा
अनेनगौरीपतित्वेपि तवालाभाद्विषमपिबत् इतिगौर्या-
अपि अधिकगुणेतिभावः॥ ५॥

श्लोक॥ व्यालोलः केशपाशस्तरलितम
लकैः स्वेदलोलौ कपोलौ स्पष्टा दष्टाधर
श्रीः कुचकलशरुचा हारिताहारयष्टिः॥
कांची कांचिद्गताशां स्तनजघनपदं पा-
णिनाच्छाद्य सद्यः पश्यंती चात्मरूपं त-
दपि विलुलितं स्रग्धरेयं धिनोति॥ ६॥

व्यालोलइति इयंराधा तदपितथाधिनोतिप्रीणयति
अर्थात्कृष्णं कीदृशीराधापाणिनाहस्तेनजघनयोः पदंआ
भोगंसद्यः आच्छाद्य आत्मरूपंपश्यंती विलुलितांम्लानां
स्रजंधारयतीति पुनःकीदृशी आत्मरूपंपश्यंती आत्म
रूपमेवाह केशपाशोव्यालोलः इतस्ततोविक्षिप्तोऽभूत्अ
लकैश्चूर्णकुंतलैस्तरलितंस्थानाच्चलितं कपोलौस्वेदेनघ
र्मजलेनलोलौव्याप्तौदष्टाधरश्रीः खंडिताधरलक्ष्मीः स्पष्टा
व्यक्ता कुचकलशरुचास्तनघटदीप्त्याहारयष्टिः मुक्ताकला

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

पः हारिता दूरीकृता कांचीरशना कांचिदाशांदिशंगता चलि
तायद्यपीतिसर्वत्रयोजनीयं स्रग्धरानामकंछंदश्चेदम्॥६॥

श्लोक॥ ईषन्मीलितदृष्टि मुग्धहसितं सीत्का
रधारावशादव्यक्ताकुलकेलिकाकुविकसद्दं
तांशुधौताधरं॥ श्वासोत्कंपिपयोधरोपरिप
रिष्वंगात्कुरंगीदृशो हर्षोत्कर्षविमुक्तनिःस
हतनोर्धन्यो धयत्याननं॥ ७॥

ईषदिति कुरंगीदृशोहरिणनयनायाः आननंमुखंधन्यो
भाग्यवान्जनोधयतिपिबति कीदृश्याः कुरंगीदृशः श्वासेन
कामजनितेनखरपवनेनउत्कंपितौकिंचिच्चलितौपयोधरौस्तनौ
तयोरुपरिपरिष्वंगादालिंगनात्यः हर्षोत्कर्षः हर्षाधिक्यंतेन
विमुक्तासक्तासालसाअतएवनिःसहाकार्याक्षमा तनुःशरी
रंयस्याः परिष्वंगंकृत्वाआलिंग्य धन्योधयतिपिबतीतिभा
वः कीदृशमाननं ईषत्मीलितदृष्टिमुकुलितनयनं मुग्धंसुं
दरंहसितंहास्यंयस्मिन् पुनःकीदृशंसीत्कारधारावशात्का
मविकारपरंपरावशात् अव्यक्ता आकुलायाकेलिस्तस्यांयः
काकुः शोकभीत्यादिभिः ध्वनिविशेषस्तेनविकसंतः प्रक
टीभवंतोयेदंतादशनास्तेषामंशुभिः किरणैर्धौतः क्षालि
तः अधरोयस्मिन्॥ ७॥

श्लोक॥ अथसानिर्गताबाधाराधा स्वा-
धीनभर्तृका॥ निजगाद रतिक्लांतं कांतं

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

मंडनवांछया॥८॥ इति च सहसा प्रीतं स्मरतांते मानितातिखिन्नांगी॥ राधा जगाद सादरमिदमानंदेन गोविंदं॥९॥

अथेति अथानंतरं राधास्मरतांतरे आनंदेन गोविंदं कृष्णमिदंवक्ष्यमाणंसादरंनिजगादकीदृशी सहसाईषद्धास्ययुक्तानिर्गताआसमंताद्भावेनबाधाकामपीडायस्याः सा स्वेनाधीनः भर्ताप्रियोयस्याः सा किमर्थंनिजगादेत्यतआह मंडनवांछयाप्रियकर्तृकालंकरणवांछयेत्यर्थः तस्याः स्वाधीनभर्तृकायाः लक्षणंभरतशास्त्रेउक्तं क्षणं कराहते नैवक्षणंचरणपातिते कंदुकेनेवकांतेन क्रीडेत्स्वाधीनभर्तृका कथंभूतंकृष्णं कांतंप्रियंकमनीयंसुंदरंपुनः कीदृशंरतौ स्मरतेक्लांतंपरिश्रांतं॥ ८॥ ९॥

## अथ चतुर्विंशतिमः प्रबंधोरामकरीरागेण यतिताले गीयते.

कुरु यदुनंदन चंदनशिशिरतरेण करेण पयोधरे॥ मृगमदपत्रकमत्र मनोभवमंगलकलशसहोदरे॥१॥ निजगाद सा यदुनंदने॥ क्रीडति हृदयानंदने॥ ध्रु०॥

यद्राधानिजगादतदेवगीतेनाह कुर्विति रामकरीरागः हृदयानंदनेचित्तहर्षकेयदुनंदनेकृष्णेक्रीडतिसतिसाराधानिजगादउक्तवती किंनिजगादेत्यतआह हेयदुनंदनकृष्णत्वं

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

मम अत्रास्मिन्पयोधरे करेण स्वहस्तेन मृगमदपत्रकं कस्तूरि कापत्रावलीं कुरु कीदृशेन करेण चंदनवच्छिशिरेण अतिशी तलेन कीदृशे पयोधरे मनोभवस्य कामस्य मंगलाय कलशः पूर्णकुंभस्तस्य सहोदरे तुल्ये मंगलं हिरण्यमिति वा ॥ १ ॥

अलिकुलगंजनसंजनकं रतिनायकसा
यकमोचने ॥ त्वदधरचुंबनलंबितकज्जल
मुज्ज्वलय प्रियलोचने ॥ २ ॥

अलीति हे प्रियकृष्ण त्वं लोचने मदीये नेत्रे त्वदधराभ्यां चुंबनेन लंबितं गलितं कज्जलं उज्ज्वलय पुनरुद्दीपय कीदृशं कज्जलं अलिकुलस्य भ्रमरसंघस्य गंजनमभिभवं संजन यतीति संजनकं विधायकं कीदृशे लोचने रतिनायकस्य काम स्य सायकान् मोचयति तस्मिन्नयनकटाक्षप्रत्यंचिकामासाद्य कामो बाणान् मोचयतीति भावः एतत्प्रेरणाय कामबाणं मुंच तीत्यर्थः ॥ २ ॥

नयनकुरंगतरंगविलासनिरोधकरे श्रु
तिमंडले ॥ मनसिजपाशविलासधरे शुभ
वेष निवेशय कुंडले ॥ ३ ॥

नयनेति हे शुभवेष रुचिरालंकार कृष्ण त्वं मम श्रुतिमंड ले कर्णप्रदेशे कुंडले निवेशय कुंडलयुग्मं स्थापय कीदृशे श्रुति मंडले नयने एव कुरंगो मृगस्तस्य तरंगविलासस्य उत्फालग मनस्य निरोधं निषेधं करोतीति तथा पुनः कीदृशे मनसिजस्य

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

कामस्ययः पाशस्तस्यविलासंसादृश्यंलीलांधारयतीति पा-
शः पशुयमन्ननिरोधकोभवतीति ॥ ३ ॥

भ्रमरचयं रचयंतमुपरि रुचिरं सुचिरं म
म सम्मुखे ॥ जितकमले विमले परिकर्मय
नर्मजनकमलकं सुखे ॥ ४ ॥

भ्रमरेति हेकृष्ण ममसन्मुखे सुंदरमुखे अलकंकेशपा
शंपरिकर्मयप्रसाधयमंडयेत्यर्थः कीदृशमलकं उपरिमुखोप
रिसुचिरंबहुकालं व्याप्यरुचिरंभ्रमरसमूहंरचयंतंकारयंतं
स्वजातीयबुद्ध्याभ्रमरस्तत्रपततीतिभावः यद्वामुखंकमल-
स्थानीयंकमलेभ्रमरास्तिष्ठंतितद्वत् कीदृशेमुखेजितंकमलं
येनतादृशे विमलेनिर्मले कीदृशमलकं नर्म्मजनकं क्रीडाकारकं ४

मृगमदरसवलितं ललितं कुरु तिलकम
लिकरजनीकरे ॥ विहितकलंककलं कम
लानन विश्रमितश्रमसीकरे ॥ ५ ॥

मृगमदेति हेकमलाननकृष्ण त्वंअलिकरजनीकरेल
लाटचंद्रेतिलकंकुरु मृगमदरसेनवलितंनिर्मितं अतएवल
लितंमनोहरं पुनःकीदृशं विहिताकृताकलंकस्यांकस्यषोड
शभागोयत्र अथवाकलाशोभायत्रद्वितीयाचंद्रप्रायंतिल
कंकुर्वित्यर्थः कथंभूतेऽलिकरजनीकरेविश्रमिताःउप
शांताः श्रमसीकाराः प्रयासजलकणायत्र एतेनचंद्रोपि
प्रकटलांछनछविर्दृश्यतइति ॥ ५ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

मम रुचिरे चिकुरे कुरु मानद मनसिज ध्वजचामरे॥ रतिगलिते ललिते कुसुमानि शिखंडिशिखंडकडामरे॥६॥

ममेति हेमानदमानखंडन मानदायकवा ममरुचिरे सुंदरेचिकुरे जात्येकवचनं कुसुमानिपुष्पाणि कुरुरचयेत्यर्थः कीदृशेचिकुरे मनसिजस्यकामस्य ध्वजचामरतुल्ये पुनः कीदृशेरतिगलिते सुरतसमयेमुक्तबंधने पुनःकीदृशे ललितेशृंगारचेष्टयायुक्ते पुनःकीदृशे शिखंडिनोमयूरस्य शिखंडकस्येवपिच्छस्येवडामरोयस्यआटोपो आडंबरमित्यर्थः॥६॥

सरसघने जघने मम शंबरदारण वारण कंदरे॥ मणिरशनावसनाभरणानि शुभाशय वासय सुंदरे॥७॥

सरसेति हेशुभाशय महोदारचित्त त्वंममसुंदरेजघने मणिरशनामणियुक्तघंटिकावसनानिवस्त्राणि आभरणानि अलंकरणानि वासयपरिधानंकारय कीदृशे जघने सरसःकामजनकः घनोनिबिडश्च पश्चात्कर्मधारयःपुनः कीदृशेशंबरदारणः कामःसएववारणःकुंजरस्तस्यकंदरे वासस्थाने॥७॥

श्रीजयदेववचसि शुभदे हृदयं सदयं कुरु मंडने॥ हरिचरणस्मरणामृतनि-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

र्मितकलिकलुषज्वरखंडने ॥८॥ इति श्रीगीतगोविंदे चतुर्विंशातितमः प्रबंधः ॥

श्रीजयदेवेति हेभक्तजन त्वंमंडनेअलंकारभूतेन्नभदे कल्याणप्रदे श्रीजयदेववचसिगीतरूपे हृदयंमनः सदयंद यायुक्तंतत्सरंकुर्वित्यर्थः कीदृशेवचसिहरिचरणास्मरणास्मृते ननिर्मितंकृतंकलिकलुषज्वरस्यकलिकृतपापरूपज्वरस्य खंडनंनाशोयेन ॥८॥

श्लोकः ॥ रचय कुचयोः पत्रं चित्रं कुरुष्व कपोलयोर्घटयजघने कांचीमंच स्रजा कबरीभरं ॥ कलय वलयश्रेणीं पाणौ पदे कुरु नूपुरावितिनिगदितः प्रीतः पीतांबरोपि तथाकरोत् ॥१॥

रचयेति इतिराधयानिगदितःउक्तः प्रीतः संतुष्टः पीतांबरोपितथाऽकरोत् इतिकिं हेकृष्ण ममकुचयोःस्तनयोश्चित्रंचित्रविशेषंरचय कपोलयोः पत्रंपत्रावलींकरेणरचयकुरुष्व जघनेकांचींक्षुद्रघंटिकांघटयअर्पयस्रजापुष्पमालयाकबरीभरंकेशपाशंअंचपूजय बंधनंकुर्वित्यर्थः हस्तेवलयश्रेणींकंकणपंक्तिंस्थापय पदेचरणयोः नूपुरौकुरु-स्थापय गीतोक्तस्यसंक्षेपार्थकथनेननदोषउक्तः ॥१॥

श्लोकः ॥ पर्यंकीकृतनागनायकफणाश्रेणीमणीनांगणे संक्रांतप्रतिबिंबसं

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

कलनया बिभ्रद्वपुर्विक्रियां ॥ पादांभोरु
हधारिवारिधिसुतामक्ष्णां दिदृक्षुः शनैः
कायव्यूहमिवाचरन्नुपचिताकूतो हरिः
पातु वः ॥२॥

पर्यंकीकृतेति उपचितंसमृद्धं आकूतं कामभावो यस्य स हरिः कृष्णः वः युष्मान् पातु कीदृशोहरिः वपुर्विक्रियां देह विक्रियांशरीरपराभित्यर्थः बिभ्रद्धारयन् किंकुर्वन् पर्यंकीकृतः शय्यास्थानेकृतो नागनायकः शेषस्तस्यफणाश्रेणी फणासमूहस्तस्यमणयस्तेषां गणेसमूहे संक्रांतंसंबद्धं तस्मि तिकृतिस्तस्यसंकलनयाअन्वयेनास्थितइत्यर्थः कायव्यूहमिवबहुशरीरतामिवाचरन्कुर्वन् किमितिकायव्यूहइत्यतआह पुनःकीदृशः पादांभोरुहं श्रीकृष्णचरणकमलं धारयतीतिधारिणीयावारिधिसुतालक्ष्मीस्तांअक्ष्णां शातैर्नेत्रसहस्रैर्दिदृक्षुः द्रष्टुमिच्छुः लक्ष्मीदर्शनंनेत्रद्वयेन तथानसंभवतीतिकायव्यूहेननेत्रबाहुल्यात् ॥ २॥

श्लोकः ॥ यद्गांधर्वकलासु कौशलमनुध्यानं च यद्वैष्णवं यच्छृंगारविवेकतत्त्वरचना काव्येषु लीलायितम् ॥ तत्सर्वं जयदेवपंडितकवेः कृष्णैकतानात्मनः सानंदाः परिशोधयंतु सुधियः श्रीगीतगोविंदतः ॥३॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

यद्गांधर्वेति यत् जंयदेवकवेः गांधर्वकलास्कगानविद्या स्फकौशलंपटुत्वं प्रावीण्यमित्यर्थः अस्तीत्यध्याहारः यद्वै ष्णावंविष्णोरनुध्यानमस्ति तथाश्रृंगाररसस्ययोविवेकः संभोगविप्रलंभादिरूपेणायद्विवेचनं तस्यतत्वंअर्थज्ञानं तस्यरचनास्कलीलायितंक्रीडाविलाससर्वस्वं यद्वालीला यितं श्रृंगारादिरसविभावनमस्ति तत्सर्वंजयदेवपंडित- कवेः श्रीगीतगोविंदतः गीतगोविंदग्रंथात्स्कधियः प रिशोधयंतु विवेकिनः विचारयंतु सर्वतोभावेनशङ्कुर्वं- त्वित्यर्थः कीदृशास्यजयदेवपंडितकवेः कृष्णैकतानात्मनः कृष्णपरायणस्येत्यर्थः जयदेवपंडितःशास्त्राध्यापकः कविः काव्यकर्ताचेतिजयदेवपंडितकवेः श्रीशब्दस्कग्रं थांतेमंगलार्थं ॥ ३ ॥

श्लोक ॥ श्रीभोजदेवप्रभवस्य राधादेवी स्कतश्रीजयदेवकस्य ॥ पराशरादिप्रिय वर्गकंठे श्रीगीतगोविंदकवित्वमस्त्क ४

श्रीभोजदेवेति पराशरादयः कविश्रेष्ठास्तेषांवर्गोगो ष्ठीतस्यकंठेगलदेशे अस्त्कतस्य श्रीगीतगोविंदकवित्वंभो जदेवप्रभवस्यभोजदेवोत्पन्नस्य तथाराधादेव्याः स्कतस्ये त्यनेनस्वपितृप्रतिपादनेनमंगलमाचरितं निजग्रंथे आशी र्पदिनेनिराधास्मरणात् आनंदयुक्ततायोनिना ॥ ४ ॥

श्लोक ॥ साध्वी माध्वीकचिंता न भव-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

ति भवतः शर्करे कर्कशासि द्राक्षे द्रक्ष्यं
ति के त्वाममृतमृतमसि क्षीर नीरं रसस्ते
॥माकंद क्रंद कांताधर धरणितलं ग-
च्छ यच्छंति भावं यावच्छृंगारसारस्व
तमिह जयदेवस्य विष्वग्वचांसि॥५॥
इति श्रीकविराजश्रीजयदेवपंडितकृतौ
गीतगोविंदे महाकाव्ये श्रीतपीतांबरो
नाम द्वादशः सर्गः

साध्वीति विष्वक्सर्वतः यावच्छृंगारसारस्वतंभावंजयदेवस्यवचांसियच्छंति तावत् हेमाध्वीकमधो भवतस्त्वमधुरमहमितिचिंतासाध्वीनभवति हेद्राक्षे त्वांकद्रक्ष्यंत्यास्वादयंति अमृतमृतमसि हेक्षीरनीरं रसस्तेमाकंद क्रंदआक्रोशं कुरु किंचहेकांताधरत्वंपातालंगच्छ श्रीजयदेवकाव्यमधुरास्व्यभगवद्रसास्वादनिर्वृनाजनास्तदेकनिष्ठाः संतः एतेषांतिरस्कारंकरिष्यंतीतिभावः॥५॥

लक्ष्मीदासतनूजेन भीषदासेन धीम
ता॥कारितागीतगोविंदटीकेयं सुखदा
स्तुवः॥१॥भीषदासनियुक्तेन कृष्णाप
त्यात्मसेविना॥ नारायणेन सुकृतं गीत
गोविंदटिप्पणं॥२॥टिप्पणेचेन्मदीये
पै स्खलितं स्यात्प्रमादतः॥ न तर्कज्ञो

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

ममाक्षेपो गंतुर्हि स्खलितं भवेत् ॥ ३ ॥

इति गीतगोविंदं काव्यं सटीकं

समाप्तम्.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

# अथराधाविनोदकाव्यं प्रारभ्यते.

श्लोक॥ मालीनोधनमालीमालीनोवनमा
ली॥ मालीनोवनमालीमालीनोवतुमाली
॥ १ ॥

श्रीगणेशायनमः श्रीराधाकृष्णाभ्यांनमः पितृवचनमवश्यमेव पाल्यंजगतिजनानितिशासितुंवनांतं गतमतिकरुणारसार्द्रचित्तं रघुपतिमेवमुपास्महेसदारं १ राधाविनोदाख्यंकाव्यं चिकीर्षुर्निर्विघ्नप्रारीप्सितसमाप्तिकामोरामचंद्रकविः परमेश्वरप्रार्थनारूपंमंगलमाचरति वनमालीवनमालाआपादलंबिनीमालातद्वान्विष्णुः आपादलंबिनीमालांवनमालांविदुर्बुधाः इत्यभिधानात् नोस्मान् ग्रंथकर्तॄन् श्रोतॄन्वाअवतुरक्षतु कीदृशः मालीनःमालक्ष्मीः मातुलक्ष्म्यांचमायायांनेत्येकाक्षरः दर्पणइवत्द्दिलग्नायस्यसः यद्वामायांलीनोलोकपरंपरयाकामाद्युत्पादनेनतदासक्तइत्यर्थः एतादृशः पुनः कीदृशः मालीनः मायांमायायांअलीनः निरंजननिराकारत्वात्तस्यामसक्तः मायांलक्ष्म्यांअलीनः सातुलीनासतुनोसक्तइत्यर्थः एकोदासीनत्वात् पुनः किंभूतः मांशोभां अलंतिव्रजंतितेमालाः यदुगोपादयस्तेषांइनःस्वामी इनःसूर्येप्रभौराज्ञिमृगांकेक्षत्रियेनृपइतिविश्वः यद्वामालंतेशोभंतेतेमालिनः इंद्रादयः तेषांइनः स्वामीईश्वरेश्वरइत्यर्थः पुनःकीदृशः मालीनः मालापुष्पस्रक्सायस्यध-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

स्तीतिमालीस्रक् दामातस्यइनः स्वामीदारिद्र्यभंजनत्वात् यद्वामेशि-
वेअलीनः तदभिन्नत्वात् यद्वामः वेधासएवअलिः कमलानुषंगि-
त्वात् भृंगौपम्यंतस्यइनः मःशिवश्चंद्रमावेधाइत्येकाक्षरः पुनः
कीदृशः घनमालीघनवत्श्यामइत्यर्थः पुनःकीदृशः बलमालीबल
भद्रेणमालतेसौबलमालीपरसामर्थ्यवान् पुनःकीदृशः मालीमाला
पुष्पस्रक् सायस्यास्तीतिमालीपुष्पस्रग्वानित्यर्थः यद्वामाअलीतिप
दच्छेदःकर्तव्यः कीदृशः अलीअलतिसर्वव्याप्नोतीतिअलीपरमात्मरू
पेणसर्वांतर्यामीत्यर्थः विश्वव्यापीत्यर्थः १ अथदशावतारवर्णनमा
रभते. वनजौवनजौखर्वस्त्रिरामीसकृपोकृपः अवतारादशैवैते कृ-
ष्णस्तुभगवान्स्वयं १ वनमालीवनेजले मालते शोभतइतिवनमा
लीवनेसलिलकाननेइत्यमरः मत्स्यरूपीविष्णुः नोअवतु कीदृ-
शः बलमालीबलेनशंखासुरोन्मूलनकरणेनबलेनमालतेसौपु
नःवनमालीकूर्मरूपीविष्णुः नोस्माकमवतुकीदृशःबलमालीसक-
लभूभारेणनिष्पंद फणामंडलानंतोद्वहनकरणेनबलेनमालतेसौ-
पु० व० वनेरण्येमालतेसौ० वराहरूपीविष्णुः नोवतु की० ब० सा
गरनिमग्नमहीमंडलोद्धरणकरणेनमालते पुनःवनमालीनृसिं
हरूपीविष्णुः नोवतु की० ब० हिरण्यकशिपुसमुच्छेदकरणेन
बलेनमालतेसौपुनः अघनमालीअइवरुद्रइव घनंयथा तथामा
लतइतिअघनमालीयद्वाअघनं-ह्रस्वंमालीवामनरूपीविष्णुः नो
वतुः की० ब० बलेनबलिच्छलनकरणेनमालतेसौ पुनःवनमालीरु
द्रस्वर्यनित्वात्तीर्थार्थंवनेपरिभ्रमन् जामदग्न्यरूपीविष्णुःनोवतु

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

की० व० सकलक्षत्रियोत्सादनकरणेन बलेनमालतेसौ पुनः वनमा-
ली दंडकारण्यदेशेरामरूपीविष्णुः नोवतु की० घनमालीघनवत्-
श्यामः पुनः की० व० पौलस्त्याद्युच्छेदकरणेनमालतेसौकी० व०
बलरमेतिसरामपदेन माल तेसौबलभद्ररूपोविष्णुःनोवतु कीदृ
शः बलमालीकालिंदीकर्षणेन बलेनमालतेसौ की० व० घनमाली
शरदंबुदगौरः पुनः अवनमाली अवनेनरक्षणेनमालतेसौबुद्ध
रूपीविष्णुः नोवतु की० व० प्राण्यहिंसादिकरणेनबलेनमाल ते-
सौ पुनः की० व० बलेनम्लेच्छोच्छेदनकरणेनमालतेसौकल्किरू
पीविष्णुः नोवतु अथसंमोहनकाममंत्रोद्धारणपक्षमाह संमोहन
काममंत्रमयरूपोहरिः नोवतु मंत्रमयत्वंविशिनष्टि मालीनः मा
शक्तिः सामान्यस्वरास्तेषुआलीनः ककारः तद्रूतत्वेनैवोच्चार्यमाण
त्वात् प्रथमत्यागेकारणाभावात् इतिन्यायेनककारोग्राह्यः तथाच
ककारात्मकइत्यर्थः घनमालीघनेनमायस्यसः घनमः इंद्रः तस्यइ
दंबीजंघनमंतर्दलतीति घनमालीतथाचलकारात्मक इत्यर्थः माली
नः मायाः इदंतस्मिन् इकारे अलीनः पुनः मालीनःमः चंद्रः अलीनो
अस्मिन् असौ तदुक्तंशारदातिलके ब्रह्माभूम्यांसमासीनः शांति-
बिंदुविभूषितः बीजंमनोभुवःप्रोक्तंजगत्त्रितयमोहनं १

श्लो० ॥ विधुरस्फरहृदिरहानलपीडिता विधु
रुरुहत्तरलानिलपीडिता ॥ विधुरुहद्दद
नालिमपीडिताविधुसुहृत्स्फगिरोकिरदी-
डिता: ॥२॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

विधुसुहृदिति विधुसुहृत् विधुःविष्णुः सुहृत् प्रियोयस्याः सा राधिका विधुश्चंद्रमसि विष्णौ विधुःकर्पूरकामयोरितिविश्वः अलींसखींप्रतिईडिताः स्तुत्याः गिरः अकिरत् उवाचेत्यर्थः कीदृशी विधुसुहृद्विरहानलपीडिता विधुःविष्णुः सएवसुहृत्प्रियः तस्यविरहः वियोगः सएवअनलः वन्हिः तेनपीडितापुनः कीदृशी विधुसुहृत्तरला विधुश्चंद्रस्तस्य सुहृन्मन्मथः तेनतरलाचंचला चंचलंतरलं चैवपारिप्लवपरिप्लवइत्यमरः यद्वा विदुःकर्पूरः तस्यसुहृत्सम स्तरलोहारमध्यमणिर्यस्याः सात्तरलः स्यान्मध्यगोमणिरितिशाश्वतः कामज्वरान्निस्तेजस्कमुक्ता इत्यमरः पुनःकीदृशीअनिलपीडिता अनिलोमलयानिलः तेनपीडिता पुनः विधुसुहृद्वदना-विधोश्चंद्रस्यसुहृत्समंतुल्यंवदनंयस्याः सा विरहसमयत्वात् चंद्रसाम्यंस्फुटमेव यद्वा कर्पूरपांडुरवदनापुनःकीदृशीईडितास्तुत्या-पुनःकीदृशी अपीडिताएनकृष्णेनपीडिताअपीडिता यद्वाअपिइडिताइतिपदच्छेदः कर्तव्यः कृष्णविरहपीडितेत्यर्थः ॥ २ ॥

श्लो० ॥ उदयतेदयतेतिमिराकरैः शशिकरै
रकरैस्तिमिराकरैः ॥ दिशमिमांचरमांचरमा
रमंकमलकोमललोलललोचनं ॥ ३ ॥

उदयतइति हेसखि शशीचंद्रः उदयंते चपरंकरैः इमांहस्तेव र्तमानांदिशंदयतेप्राप्नोति रूपयतीत्यर्थः रूपयितृत्वेहेतुमाह कीदृशैः करैः तिमिराकरैः तिमिरस्य अकरैः अकर्तृकैः यद्वातिमिरंअसमंतात्किरंतिहिंसंतीतितिमिराकरैः तद्ध्वांतनाशकैरि

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

त्यर्थः चपरंकरैः मांदयते पीडयतीत्यर्थः दयदानगतिहिंसादर्शने
षुभौवादिकः पीडनत्वमाह कीदृशैः करैः अकरैः अकं दुःखंरातिददा-
तीतिदुःखदैरित्यर्थः यद्वाकंजलंरांतिस्वीकुर्वंतीतिकराः नभवंती-
तिअकरास्तैरुष्णोरित्यर्थे अतस्त्वंरमारमंलक्ष्मीकांतंप्रतिचरगच्छ
सः रमासक्तोस्तिअतः सनागमिष्यति कीदृशं रमारमं कमलको
मललोललोचनं लुल्यतेतल्लोलंलोल त्वंलातः ते लोललेकमलंस
रोजमिवशृंगीवासइव कोमलेमनोहरेलोललेचंचलेलोचनेयस्यतं
यद्वाकीदृशः शशीअंकमलकः अंकः कलंकः सएवमलोयस्मिन्तदं
कमलंकंमूर्धयस्यसः एतत्पक्षेकीदृशंरमारमं लक्ष्म्याक्रीडंतंयद्वा-
चरमांद्दिशं अत्यामवस्थांदयतेप्रापयति पुनःकीदृशंरमारमंलक्ष्मी
रमं यद्वाशशीकमलः केस्फुरवेकमलकः दुःखदइत्यर्थः ३

श्लो०॥ कुमुदबंधुरबंधुरबंधुरः सतनुतेतनु
तेतनुतेतनः॥ हिमकरोहिमताहिमतामता
किमनुमांसदृशंसदृशंविधोः॥ ४ ॥

कुमुदबंधुरिति हेसखिहिमकरःचंद्रः मांअनूद्दिश्यअहिमतांउ
ष्णतां तनुतेविस्तारयति हियतत्तद्विधोः सदृशंकुलपरंपरागतं
विरहिणीपीडनंउचितंकिंकीदृशंमां नतांमतांमान्यां पुनःकीदृशीं-
मांसदृशंसज्ञानांदृक्ज्ञानेज्ञातरिचक्षुरित्यमरः कीदृशःहिमकरः अबं
धुरः अपांअंधुः कूपःसंरातिप्राप्नोतीतित्यबंधुरः शीतलः पुंस्येवां-
धुः प्रहीकूपइत्यमरः पुनःकीदृशः कुमुदबंधुरबंधुरः कुमुदानांबंधु
रःप्रियः बंधुरित्यर्थः पुनःकीदृशः अतनुतेततः अतनुतामहत्त्वंत-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

नुतेप्रासः अतएवनुतांस्तोतृत्वंइतः सएवइतिततःयद्वा अइति पदच्छेदः हिमकरः शीतहस्तः अः विष्णुःमांअनुद्दिश्याविधोःचं- द्रमसःसदृशंसमानंअहिमतांउष्णतांपरितापंतनोति कीº अःकौ पृथ्व्यांसुतरांहर्षोयेषांतेकुमुदः कुमुदांजलानांअबंधवःराक्षसादयः तानूरातिगृण्हातिइतिकुमुदबंधुरः दुष्टहंतासचासौबंधुरबंधुः शिष्टसुहृदित्यर्थः ॥ ४ ॥

श्लोº ॥ कमलिनीमलिनामलिनालिनावि
चलताचलतासुलताशुभाम् ॥ विधुतभां
विधुतांविधुभानुभिर्नयनयोरनयोर्नय
सीनयोः ॥ ५ ॥

पुनःप्रकारांतरेणचंद्रंनिंदति कमलिनीति हेअलित्वंइमांकमलि- नींईनयोर्दीर्घयोः अनयोःनामनयोःनानयसिनापास्यसि कीदृशः मलिनालतासुविचलतालिनाविधुतांत्यक्तां पुनः कीº लताशुभां- लताश्रेष्ठां कीº चंद्ररश्मिभिर्विधुतभांत्यक्तकांतिं यथाकेनचित्सुं साकरस्पष्टांकाचित्प्रोषितभर्तृकांत्यजति यद्वामलीकृष्णः गोपीवि हारत्वादित्यर्थः मलिनाकृष्णोनविधुतांत्यक्तांलताशुभांगोपीश्रे ष्ठांतनुत्वाल्लतासाम्यं विधुभानुभिः विधुतभांदुःखीकृतांमांपश्य सि अतोकृष्णानयनाय गच्छेत्यर्थः ॥ ५ ॥

श्लोº ॥ सखिविभातिविभातिविभावि-
भानसरसीसरसासरसारसैः ॥ अलिकु
लैर्विधुताविधुताधुतानिनमदंअसुखीवि

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

मुखीस्थिता ॥ ६ ॥

पुनः भंग्यंतरेणचंद्रंनिंदति सखीति हेसखिविधुनेंदुनाविधुता-
मुकुलितपंकेरुहाकृताअतएवअलिकुलैः शिलीमुखवृंदैः सरसासर-
सारसैः सरसंसविलासमासरंतिशब्दंकुर्वंतितेसरसारसाः सारसाः तै
श्चतैश्चधुतात्यक्ता अतएवअतिविभाविभिः पक्षिभिः यत्कांतिः तस्या
अतिक्रांता अतएवविभागतकांतिरविभाकृष्णकांतसदृशीविनमद
मुखीविनमंतिअब्जमुखानियस्याः सातएवविमुखीमुखीपराङ्मुखी
स्थितासरसीनविभातिएतादृशींदृष्ट्वादुःखातिशयंप्राप्नोतिअतः कृ
ष्णमानयेत्यर्थः ॥ ६ ॥

श्लो० ॥ कुमुदिनीदयितोदयितोनतांनि
जकरैरकरैर्दहतिस्फुटं ॥ यदयमेकपदेवि
पदेभवद्विकचपुष्करिणीहरिणीदृशः ॥ ७ ॥

पुनःभंग्यंतरेणचंद्रंनिंदति कुमुदिनीति हेसखि कुमुदिनीदयि
तःचंद्रः अकरैः अकंदुःखंरांतिददतितेअकरास्तैर्दुःखदैरित्यर्थः नि-
जकरैः स्वकिरणैः दयितोनतांदयितेनभर्त्राऊनतांस्वामिशून्यांविरहि
णीमित्यर्थः स्फुटंअत्यर्थंयथातथादहतितापयतिपीडयतीत्यर्थः अ
थदृष्टांतमाह कुतः यतोयतः कारणात् अयंचंद्रः विकचपुष्करिणी
प्रफुल्लपद्मिनीसैवहरिणीदृक्कांतातस्याः विपदेविपत्तये एकपदे
विपत्तये तत्क्षणेक्षणमात्रंअभवज्जातः ॥ ७ ॥

श्लो० ॥ विधुरिताधुरिताधुरितादहन्वि
धुरयन्जनितोजनितोकभृत् ॥ इहतदक्षि

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

गतेक्षिगतेब्जिनीरविमतिर्विमतिर्निमि
मीलसा ॥ ८ ॥

विधुरिति विधुरिप्रथमतः विधुरिताः विरहिण्यःताःप्रसिद्धाः वनिताः दहन्तापयन् अयंविधुः विध्यतिविरहिणमितिविधुः चंद्रःजनितःजन्मतः अंकभृत् जनिंतः जातः संभूतः नहन्याहिपदंप्राप्तंकान रंवाप्रतिक्षतमितिभावः कीदृशाःताः धुरिताः धुरंमुख्यत्वंइताः प्राप्ताः अतःदृष्टांतमाह कुतःयतःहेतोः क्षिगतेक्षिंक्षीणत्वंगतः क्षिगतःतस्मिन् नामैकदेशग्रहणंनामग्रहणमितिन्यायात् क्षीणत्वंगतइसर्थः इहचंद्रमसिअक्षिगतेसतिहकूप्राप्तेसतिरविमतिः सूर्यसत्ताविमतिः विरुद्धबुद्धिः चंद्रमसीतिभावः अब्जिनीपद्मिनीनिमिमील मुकुलिताबभूव सकलंकिनिदृष्टेसतिनेत्रोन्मीलनंरविदर्शनंकुर्यादितिभावः ॥ ८ ॥

श्लो० ॥ मलयपन्नगपन्नगमंडलीकव-
लितोवलितोनुवनानिलः ॥ अदयमंगम
दंगमदंगकंदहतियत्भ्रमयंभ्रमयन्न-
य ॥ ९ ॥

मलयपन्नगेतिहेआलिकवलितः आगतः कवलिः कामधेनुः वनानिलः वनवायुः मलयस्यपदःप्रांतपर्वताः पादाः प्रत्यंतपर्वताइत्यमरः तेषुनगाःवृक्षाः तेषुपन्नगाःसर्पाः तेषांमंडलीआलिः तयाकवलितःपीनः नुवितर्केनुः पृच्छायांवितर्केचेत्यमरः कुतः अंगअलिहेआलि स्युःप्याट्पांडगहेहेभोरेहोसंबोधनार्थकाइत्यमरः यत्नूयतःका-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

रणात्भ्रमयन्भ्रांतिंकारयन् अंगमत्अंगानिमथ्नातीतिअंगमर्द गमथकः अयंवायुः भ्रमयन्भ्रमंप्रासंमर्दंगकं-ह्रस्वशरीरस्ययौवनमि त्यर्थः अदयंदयारहितंयथातथादहतितापयतीत्यर्थः अन्यथाक- थंपीडयतीत्यर्थः ॥ ९ ॥

श्लो० ॥ अयिरसालवनीनवनीरनीरनव
नीनवनीपवनीवती ॥ अलिकुलालिकुला
लिकुलाकुला भातिहिमामहिमामहिमाहि
मा ॥ १० ॥

अयीति नवनी नवीनत्वंप्राप्तानवानूतनायेनीपाः कदंबास्तेषां- वनीवनंतद्वतीसकिसलयकदंबयुक्ताइत्यर्थः अतएवानवनीअरक्ष कामत्पीडनतत्पराइत्यर्थः अलिकुलालिकुला अलिनांकुःस्थानं- अभ्रमित्यर्थः तांलांतिस्वीकुर्वंतिनेकोकिलास्तेषांआलिस्तस्याः कु लंगृहंयस्यांकोकिलासक्तेत्यर्थः कुलंकुलेगणेगेहेदेहेजनपदेपि चेत्यमरः अलिकुलाकुलाअलिवृंदासक्ताअतएवाहिमाअहेःसर्प स्यमाइवमायस्याः सर्पवत्भयानकाव्यकथाचेत्यर्थः हिमासीतला रसालवनीसहकारवनंरइत्स्वार्थेङीप् अहिमांउष्णांतद्विरहवतीं- मांप्रतिरनीःरः अग्निः तन्नयतिसाअस्तिहिअनलतापजननीत्यर्थः ॥ १० ॥ ॥ ॥ ॥

श्लो० ॥ बकुलमाकुलमालिपरागितंमधुप
रागपरागपरालिभिः ॥ विशदशारदशार-
दशारदंशशकलंककलंककलंकितं ॥ ११ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

बकुलमिति हेअलि तद्बकुलंबकुलपुष्पंदृश्यते की॰ परागितंसं
जातं किंजल्कितंपुनः कीदृशं मधुपरागान्पिबंतितेमधुपरागपाअ
तएवरागपराः स्नेहगायनपरास्तेचतेअलयश्चतैराकुलंव्याप्तं पुनः
कीदृशं विगतंशंसुखंयस्याः साविशासुखासादशायेषांतेविश-
दशाविरहिणीजनास्तान् अर्दतिपीडयतितत् शंअरातीसाशाराद
शावस्थायेषांतेस्त्र्यादिसुखंभुंजाना तेषांआअस्त्यंतरं अनलंतापं
द्यतिखंडयतिएवंविधंवियोगिनामसुखदंसुखप्राप्तानांतापखंड-
नमित्यर्थः पुनः कीदृशीं शशकलंककलंशशकलंकश्चंद्रः तस्यक-
लाकांतिरिवकांतिर्यस्यतच्चंद्रसदृशंव्यापकमितिभावः पुनःकी
दृशं कुकलंकितंकेनवायुनाकलंकितंकंपितम्॥ ११॥

श्लो॰॥ नवमशोकमशोकमशोकदे सुरभि
तारभितालिरतारतं॥ सखिससमाश्रयमा
श्रयमाश्रयकमलिनीमलिनीपइवागतः॥१२

नवमशोकमिति हेअशोकदेशोकंद्यतिसाशोकदातशोकदाअ
शोकदातस्याः संबोधनेहे अशोकदेहेदुःखिनेत्वंनवंअशोकं अशो
कनामानंवृक्षंआश्रय की॰ अशोकं शोकरहितं पु॰ की॰ सुरभि
तारभितालिरतारतंसुरभितयासुगंधितयारभिताअनन्यशो
भाःसंजाताः पुष्परागरंजिताइत्यर्थः तेचतेअलयश्चतेषांरतंर
तिसुखंतस्मिन्नारतं आश्रितंभ्रमराणांसुखमस्तिअतस्तेदुः-
खंहरिष्यंतीत्यर्थः पु॰ की॰ माश्रयंमायाः शोभायाः आश्रयंस्था
नं अतोहेसखिसःमाश्रयः लक्ष्मीपतिः आगतएवेतिअवेहि क

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

इवयथाअलिनीपः भ्रमरिणीपतिः कमलिनींप्रतिआगच्छति त थाहरिर्लक्ष्मींमुक्त्वात्वांप्रत्यागतएवजानीहीत्यर्थः ॥ १२ ॥

श्लो० ॥ सखिहितासिमतासिमतास्यमां
नवमशोकमशोकमशोकदां ॥ तदिहमा-
मवमाभवमाममांव्रजहरिंनवनीरदनीरदं १३

सखीति हेसखि त्वंहितापूर्वंप्रियाअधुनात्वंअसिमताअसेरि वमतं अभिप्रायंयस्याः असिवत्पीडाकर्त्रीत्यर्थः मतामान्यासि कु तःयतः त्वंमांनवंअशोकंआस्यब्रूषे की० अशोकं अस्यविष्णोः शो कोयस्मादसौततद्दर्शनादधिकदुःखदमित्यर्थः की० मांअशोकदां अस्याविष्णोःशोकदुःखंददातीत्यात्मनेत्यर्थः अशोकदातांतत्तस्मा त्त्वंहरिंव्रजगच्छ मांअवदुःखतः अवरक्ष की० मांअमांअशोभांवि ष्णुविरहेणकर्शितां की० इहंदंकामंजिहितेप्राप्नोतिइहसकामुक मित्यर्थः यमकत्वादनुस्वारच्युतालंकारः पु० की० मामवंमालक्ष्मी र्मोब्रह्मातौवातिगच्छतिइतिमामवंलक्ष्मीब्रह्मभ्यामपिसेवितमि त्यर्थः पुनःकीदृशः नवनीरदनीरदंनवोनूतनोयोनीरदःमेघःतस्य- नीः नितरांईःयाशोभातांरदतिप्राप्नोतिनवांबुदश्यामित्यर्थः १३

श्लो० ॥ इतिसखीगदितागदितादिता
नवनरायवरायवरायवा ॥ इतिगिरंकल
याकलयाकलापटुगिरामृदुतामृदुतादु
ना ॥ १४ ॥

इतीति कलानाम्नीसखीकलयागंभीरयागिराअनवनरायनवो

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

नरः नवनरः ननवनरः अन्नवनरः तस्मै पुराणपुरुषायइतिवक्ष्यमा-
णांगिरं यसटुयथातथाअदितददातिस्म की० गिराकंसुखंलातिददा
तिसाकलातयाप्रियोषेतेनसुखकारिणेत्यर्थः पुनः की० मृदुतामार्दवंअ
मृदुताकठोरत्वंताभ्यांदुनोतीतितयाकी० कलातयाइतिगदिताउक्ता
पु० की० अगदितावाशब्दइवार्थेस्वचातुर्यादनुक्तेवकीदृशायवराय
वरायवरः अंयोयस्यवरायः सचासौवरश्चवरूभावहाविधिमतेश्रेष्ठा
यच ॥ १४ ॥

श्लो० ॥ मलयजंतनुते तनुतेतनौसहचरी-
नलिनीनलिनीदलं ॥ सुनयनानलदंज्वल
चंदसातदपिसीदतिसीदतिबंधुता ॥१५॥

मलयजेतिहेकृष्ण तेसहचरीसखीतनौअतनुभूरिमलयजंमल
याचलसंबंधिचंदनंतनुतेविस्तारयति लेपनंकरोतीत्यर्थः पुनःतेक
मलिनीतेप्रियातनुत्वात् पद्मिनीसाम्यंतनौअतनुबहुलंनलिनी
दलंतनुतेपुनः तेसुनायेनादीर्घलोचनाअनलदंतापनाशकंनलदंउ
शीरंतनौतनुतेतदपिसासीदतिदुःखंप्राप्नोतिअपरंबंधुताअस्मदा
दिसखिनासीदतिपरितापयातिनश्यतिवेत्यर्थः ॥ १५ ॥

श्लो० ॥ समुदितेमुदितेमुदितेक्षणेहिम
करेमकरेनकरेश्रुती ॥ पिकरवेवरवेवरवे-
तिसाहरिणलांछनलांछनलांछना ॥ १६ ॥

समुदितेति ईश्वरलक्ष्मीपतेअमुदितामुद्राहितासातेप्रियाईक्षणे-
अमुदितेमुद्राहितेमुकुलितेकरोति संकोचयतीत्यर्थः कस्मिन्सतिहि

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

मकरेचंद्रेसमुदितेसतिउदयतिसति की० मकरेनकरेमकराणांमत्स्या नांइनःप्रभुः समुद्रस्तस्यकरातिनिकरःस्फुरवदः तस्मिन्सर्वस्यापि- स्फुरवकरेतस्यास्तुदुःखदइत्यर्थः चपुनः श्रुतिकर्णौ अमुदितेकरोति आच्छादयतीत्यर्थः कस्मिन्सति पिकरवेकोकिलाकूजितेसमुदि तेसति कीदृशी अवरवाअवेतिशब्दंकुर्वाणा पुनःकीदृशीवेत्यद्धा क्षरेणाइइतिउक्ताक्षरेणलांछनश्चंद्रः सएवलांछनंचिन्हंयस्यसः शिवःस्रीसःलांछनंचिन्हंयस्याः साशिवशिवेतिजपतीत्यर्थः ॥१६॥

श्लो० ॥ नसहतेसहतेसहतेसखीनवविं-
योगवियोगमयोगहृत् ॥ सपदितांतरुणिं
सरणिंमणिंकिरतुनामनवंनवनीविजं ॥१७॥

नसहतइतिहेअयोगहृत् अयःलोहंतत्वंगच्छतितत्हृदयंयस्य हेकठिणहृदयहेवियोगगरुडारूढ हेसह हेशांततेसखीप्रियातववि योगंनसहतेसहतेईतदुःखिताद्विप्सार्थस्त्वं अतःसपदिनामधुनामन सिवर्तमानांतरुणिंकिरतुत्यजतुसरणिंकिरतुसरणिंप्रियाकुंजमार्गं राधावनमार्गंकिरतुगच्छतु सरणिःपद्धतिःपद्येत्यमरः चपरंनवंनू तनंनवनीविजंवसनग्रंथिस्थंमणिंकिरतुक्षिपतुनामनिश्चयेन १७

श्लो० ॥ अयतयाकलयाकलयाशुभांव
नजदामजदामजदीक्षिभिः ॥ हरिरगात्सम
गात्समगात्स्वसामुदमतीवमतीवदृशोः
स्थितं ॥१८॥

अयतयेति हरिः तयाकलयासहशुभांराधिकांअगात् कीदृ

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

श्याकलया कंसुखंलातिप्राप्नोति हृष्टचित्ता कीदृशः हरिः वनजानिकमलानितेषांदामसमूहः तस्माज्जातंदाममालातस्याःजाता याकांतिःसाविद्यतेयस्यतथोक्तः साप्रियातंवीक्ष्यअतीवमुदंअगात्प्रापआगतंविष्णुंआलोक्यहृष्टाभूदित्यर्थः कीदृशंआगतंअगःगोवर्धनः अतोयेनतं पुनःकीदृशः अतीवतअनोद्धृतंपुनःकीदृशं दृशोःस्थितं ॥१८॥

श्लो० ॥ रामचंद्रकविनाकविनादःपूरुषो
त्तमसुतेनसुतेना। राधिकाहृदयशोक-
दमासीद्राधिकाहृदयशोकदमासीत् ॥१९

रामचंद्रेति अदःराधिकाहृदयशोकदंराधिकायाःहृदयंतस्य शोकः तंद्यतिखंडयतितत्काव्यंरामचंद्रकविनाकृत्वा आसीत्रामचंद्रेणकृतमभूदित्यर्थः कीदृशेनकविना कःब्रह्माउःशिवःअःविष्णुः अः वायुः अः अग्निः अःसूर्यः तेविद्यंते आराधनीयत्वेनयस्य तेनपुनःकीदृशेन पुरुषोत्तमःद्विजः तस्यसुतःजनार्दनः तस्यईनेनज्येष्ठसःतेनराधिकाचहृदयशोकादिराधिकाहृदयशोकदुःखनाशिकाकलामश्चंद्रश्चअःविष्णुअः वायुश्चअस्यातिविरहिणामितिअसः मधुश्चंद्रःकामश्चतेषांइत्प्रापकंवर्णनीयस्तेनतत्-राधिकाहृदयशोकदमासीत् ॥ १९॥

इतिश्रीपुरुषोत्तमात्मजजनार्दनस्तस्य
नंदनरामचंद्रकविकृतंराधाविनोदाख्यं

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## काव्यं सटीकं समाप्तं. शुभंभवतु॥

श्रीगणेशायनमः॥ अथषट्पदीस्तोत्रप्रारंभः॥ अविनयमपनयविष्णोदमयमनः शमयविषयमृगतृष्णां॥ भूतदयांविस्तारयतारयसंसारसागरतः॥ १॥ दिव्यधुनीमकरंदे परिमलपरिभोगसच्चिदानंदे॥ श्रीपतिपदारविंदेभवभयखेदछिदेवंदे॥ २॥ सत्यपिभेदापगमेनाथतवाहंनमामकीनस्त्वं॥ सामुद्रोहितरंगः क्वचनसमुद्रोनतारंगः॥ ३॥ उद्धृतनगनगभिदनुजदनुजकुलामित्रमित्रशशिदृष्टे॥ दृष्टेभवतिप्रभवतिनभवतिकिंभवतिरस्कारः॥ ४॥ मत्स्यादिभिरवतारैरवतारवतावतावसुधां॥ परमेश्वरपरिपाल्योभवताभवतापभीतोहं॥ दामोदरगुणमंदिरसुंदरवदनारविंदगोविंद॥ भवजलधिमथनमंदरपरमंदरमपनयत्वंमे॥ ६॥ नारायणकरुणामयशरणंकरवाणितावकौचरणौ॥ इतिषट्पदीमदीयेवदनसरोजेसदावसतु॥ ७॥ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितंश्रीविष्णोःषट्पदीस्तोत्रंसंपूर्णम्॥ ॥ ७॥ ॥

**सूचना**- प्रकृतमस्माभिर्महद्भिरक्षरैरुत्कृष्टैर्ईदृशैः पत्रैश्चसिद्धांतकौमुदीपुस्तकंसटीकं नैषधकाव्यंसटीकंमाघकाव्यंच. मुद्रितुमारब्धमस्ति एषांपुस्तकानांस्वरूपस्थितिस्तुव्यवहारेप्रोच्यमान (बूक) इतिशब्दवत् सिद्धांतकौमुदीअर्धाजानास्ति. अष्टादशस्मृतिगर्गसंहिता. दशकर्मपद्धति रामानुजसांप्रदायिप्रपन्नामृत. लघुकौमुदी. प्रयोगविधिसहितामहदक्षरैर्मुद्रितादुर्गासप्तशतीत्यादिपुस्तकानिनूत्नानिमुद्रितानिसिद्धानिविद्यंते व्यवहारप्रसिद्धानि सिद्धपुस्तकानिगीर्वाणानिदेशभाषिकाणिचबहूनिसंतीत्यलंविस्तरेण.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

